# CHANDRA SEKHARA CHAMPU.

A

# POEM

IN

PROSE AND VERSE.

BY

RAMANATHA.

PART. II.

EDITED

BY

PANDIT JIBANANDA VIDYASAGARA B. A.

*Superintendent, Free Sanskrit College.*



CALCUTTA:

PRINTED AT THE SATYA PRESS

1874.

*To be had from Pandit Jibananda Vidyasagara B. A. perintendent, Free Sanskrit College of Calcutta.*

पण्डितकुलतिलक-पूज्यपाद श्रीमत् तर्कवाचस्पति
पाद-प्रणीत-प्रकाशित-पुस्तकान्येतानि

१ आशुबोध व्याकरणम् ...
२ धातुरूपादर्शः ...
३ शब्दस्तोम-महानिधि [संस्कृत अभिधान]
४ सिद्धान्तकौमुदी—सरलाटीकासहिता ...
५ सिद्धान्तविन्दुसार [वेदान्त] ...
६ तुलादानादिपद्धति [वङ्गाक्षरैः] ...
७ गयाश्राद्धादिपद्धति ...
८ शब्दार्थ रत्न ...
९ वाक्यमञ्जरी [वङ्गाक्षरैः] ..
१० छन्दोमञ्जरी तथा वृत्तरत्नाकर—सटीक
११ वेणीसंहार नाटक—सटीक ...
१२ मुद्राराक्षस नाटक—सटीक ...
रत्नावली ...
मालविकाग्निमित्र—सटीक ...
१५ धनञ्जय विजय—सटीक ...
१६ महावीरचरित ...
१७ साङ्ख्यतत्त्वकौमुदी—सटीक ...
१८ वैयाकरणभूषणसार ..
१९ लीलावती ...
२० वीजगणित ...
२१ शिशुपालवध—सटीक ...
२२ किरातार्जुनीय—सटीक ...
२३ कुमारसम्भव—पूर्वखण्ड सटीक ...
२४ कुमारसम्भव—उत्तरखण्ड ...
२५ अष्टकम् पाणिनीयम् ...
२६ वाचस्पत्यम् [संस्कृत वृहदभिधान] ...
२७ कादम्बरी—सटीक ..
२८ राजप्रशस्ति ...
२९ अनुमानचिन्तामणि तथा अनुमानदीधिति

# चन्द्रशेखरचम्पूः।

## ( उत्तरभागः )

श्रीलश्रीरघुनाथदेवशिवदादेव्योस्तनूसम्भवः,
शम्भोर्भक्तिमयात्मवृत्तिरमलः श्रीराजहंसार्भकः।
पौराख्यां नवचन्द्रमौलिकथया श्रीरामनाथः स्वयम्,
चम्पूं गुम्फितवान्, मदीयकथयोत्कासीत्स्वसखोऽत्र सन् ॥

---

वि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण संस्कृता।

—०:०—

कलिकाता-सत्ययन्त्रे

मुद्रिता।

शाका: १७९६।

# चन्द्रशेखरचम्पूः ।

॥ द्वितीयोभागः ॥

ततः प्रभाते प्रभयातिरम्यां सभां समासाद्य सितांशुमौलिः ।
कुमारयोरानयनाय राजा सम्प्रेषयामास वरानमात्यान् ॥ १ ॥
तावेत्य सन्तापहरौ जनानां हेमन्तशीताविव कान्तरूपौ ।
प्रणेमतुस्तन्नयनाब्जयुग्ममुद्वेजयन्तौ पितुरिन्दुमौलेः ॥ २ ॥
राजापि देव्या गृहनिर्गतस्य कापालिकस्याकृतितुल्यमूर्त्तीम् ।
मत्वा तु तौ शापविकारितात्मा मुहुर्मुहुर्गूढ़दृष्टशान्वपश्यत् ॥ ३ ॥
अचिन्तयच्च—हा धिक् कष्टं स्वभावचपला हि स्त्रीजातिः स्वभाव-
कपटपेटिका च पुंवचनपटीयसी च ।
अहोऽबलानां प्रबलैव माया ह्यवञ्चयन्मामपि यद्गिरैषा ।
हा वामतां वामदृशां न कोपि कैरप्युपायैरपहर्तुमीशः ॥ ४ ॥
वंशेमनोरखिलमानवसत्तमस्यजाताककुत्स्थनृपतेस्तनयाप्रिया मे ।
हाहन्तधिग्व्यवसितङ्किमिदन्त्वदीयंविश्वास एववनितासुनहीतिसत्यं
॥ ५ ॥ किं कुम्मः—

चन्द्रञ्चेन्मलिनीकरोति रजनी भानुं तथा निर्मला,
लक्ष्मीर्वा दिवसस्य सा यदि सतां वृत्तिर्गुणान् कृन्तति।
सत्कीर्तिर्यदि धिक्कृतिं वितनुते पीता सुधा हन्ति चेत्,
सत् प्रज्ञापि हि कृच्छ्रदा यदि भवेत् कुर्वन्तु किं कोविदाः ॥६॥

विचिन्तयन्नेवमसुस्थचेता विलम्ब्य राजाक्षणमुत्थितः सन्।
विसृज्य सर्वान् शयनालयान्तः शयानवद्ध्यानपरो बभूव ॥ ७ ॥

नरेन्द्रपुत्रावपि वासमेत्य क्षीणावुपाचिन्तयतां मिथस्तौ।
हा हन्त राज्ञा ह्यवधीरितौ स्वः किमर्थमित्येव वितर्कयन्तौ ॥८॥

अलब्धविद्यौ किमु हीनवीर्यौ किं दुश्चरित्रौ किमु लोकपालौ।
किम्भक्तिहीनौ गुरुसज्जनानां ननन्द नावां यदयं पितापि ॥ ९ ॥

नवा सुहृद्भेदकरोऽत्र कश्चिदस्त्येव वा केन च कारणेन।
सन्दूषितोगूढ़पदोवगूढ़ोन भेदहेतुं मनसाभ्यु पैमि ॥ १० ॥

अबीजतोप्यङ्कुरपल्लवादिक्रमेण तत्तत्फलमप्यकाले।
उत्पाद्य विज्ञानपि मोहयन्ति महेन्द्रजालिप्रतिमाः खला हि ॥११॥

नीचैः स कुद्दालमुखेन तद्वत् मुखेन दूर्व्वाहृतपूरितेन।
मलं परेषामुपगृह्य वृत्तिमाप्नोति नूनं खलपूः खलश्च ॥ १२ ॥

स्वपुंविभेदे निपुणातिगूढा संवञ्चने दृष्टिमतोपि दक्षाः।
दक्षाः परार्थापहृतौ खलस्य वृत्तिश्च दूतौ प्रकृतिश्च दुष्टा ॥ १३ ॥

विनापराधादहयोपि नैव दशन्ति न स्वार्थमृते वृकाश्च।
परापकाराय भवन्ति नैतौ पराधिकर्त्तुः पिशुनस्य हेतू ॥ १४ ॥

परापकारं खलु निर्निमित्तं कुर्वन्ति हा हन्त खलाः स्वभावात्।
ज्ञातनिमित्तेपि च साधुवृत्ता न चापकुर्वन्ति परान् स्वभावात्॥१५॥

धर्मश्च कीर्त्तिश्च परोपकारोलाभः सतां ग्राम्यजनस्य लाभः ।
वित्तादिलाभोल्पमतेः खलस्य परस्य सम्पीड़नमेव लाभः ॥ १६ ॥

निरर्थकं क्रन्तति वस्त्रतुल्यं मर्म्मापरेषां खल उन्दुराभः ।
दोषेतरे दृक् न भवत्यमुष्य दोषैकदृष्टेः खलपेचकस्य ॥ १७ ॥

नोक्तिर्न दानं न रतिर्न भीतिर्न शास्त्रशिक्षा नच लोकवीक्षा ।
न केप्युपायाः प्रभवन्ति हन्त खलस्वभावस्य निवर्तनाय ॥ १८ ॥

इदं महद्दुःखतरं बनप्रियः कलैकलापी विरलं ब्रवीति ।
इदन्ततोदुःखतरं हि दुर्वाक् काकःकटूच्चैर्बहुरारटीति ॥ १९ ॥

सच्छिद्रोपि न गुणं गृह्णाति, लघुरपि न गुरुयन्त्रणया निश्चलो भवति, जलवन्नीचाभिमुखोपि न प्रणतमभिसरति, वायुरिव छिद्रानुसार्य्यपि न साधुहृदयसुषिरं प्रविशति, शून्यमिव छिद्रेषु प्रत्यक्षमेव लक्ष्यते, न जनावकाशं प्रयच्छति, ज्वलन इवाश्रयाशोपि न साधु प्रकाशते, पृथ्वीव कालेन निक्षेपं हरति, न च क्षमापदं भजते,पुरुषाद[मत्तोन्मतः]इव दूरपरिहरणीयोपिभवति, भजङ्ग इव प्राणान्तं विना न प्रहार्य्यः ; खलानामपुण्यजनानां पुण्यजनानामिव दर्शनं—विप्लवबीजानां प्लवगबीजानामिव श्लेषभावसमुपद्रवाय, अभाष्याणामार्हतादिभाष्याणामिव भाषणं पापाय मोहायच, अज्ञानामुपदेशोपि ज्ञानामिवाशेषसम्भवोच्छेदाय, अकरुणानां करुणानामिव समागमोहृच्छोकाय, जडानामजडानामिव देशानामभिगमस्तृषिताशाच्छेदाय, जीवितच्छेदाय च, ताडनं शुनामिवैषां कटुशब्दश्रवणाय, एतेषु वाक्प्रयोगोगह्वरेष्विव द्योः प्रतिशब्दश्रवणाय एषां, पालनं उपेक्षा वा रोगानामिवानर्थाय, एभ्यः प्रियवाग्दानं गुड़दानमिव ज्वरोत्प्रकोपाय,

द्रवद्रापणमेतेष्वसंस्कृतेषु सर्व्वं भक्तेष्विव केवलं भस्मीकरणाय, एतेषु सच्छिद्रेषु पात्रेष्विव स्नेहार्पणमधः पतनाय, किमन्यैरनल्पजल्पितैरेते दुष्कृतय उदासीनमपि पुरुषं क्लेशभाजं कुर्वन्ति, नैतेषु त्रपा अकुलजदारेष्विव, नैतेषु कृपा शाकुनिकेष्विव, नैतेषु स्नेहः पांशुलेषु भूभागेष्विव, नैतेष्वभयं श्वापदेष्विव, नैतेषु गौरवं दृष्टिमहत्स्वपि तूलभारेष्विव, एते धृष्टा वामा इव विपरीतरतिप्रगल्भाः, कालरात्र्योऽमी मलीमसपक्षाश्रिताः अदक्षिणायना दिवसा इव दिनं दिनं जनानां सन्तापं वर्द्धयन्तोविवर्द्धन्ते क्लीबीकृतचण्डाश्च, दुर्य्योधन इवाजातशत्रावपि जातशत्रुभावाः, दुःशासनोदुर्मुखोपि धृतराष्ट्रप्रियः कर्ण इव पुरुषैकघातशक्तिगर्वितः, शकुनिरिव धूर्तविद्यया धर्म्मवञ्चनेन धनापहारचतुरः, तप्तपिठरेष्विवैतेष्वणीयानपि स्थापितः, सर्षप इव विश्वासः स्फुटत्येव।

अन्धोबधिरोमूकः सुदृष्टिमान् सुश्रवाः सुवक्ता च।
सदसत्क्रिययोः खल इति चित्रतरः कोपि दुर्जीवः॥ २०॥

परपरिवादे तु खलोगुणवादे सज्जनोविज्ञः।
आद्यः परापकारे कृती तथान्यः परोपकारे च॥ २१॥

उद्घाटयेत साधुमुखं कथाभिः खलाननं नेङ्गिततोपि विद्वान्।
सुगन्धिदुर्गन्धिविलेपपूर्णकुम्भाविमौ वासविलासदौ नृणाम्॥२२॥

तत् किमिदमप्रतीकारमापतितम्?—

अथ प्रतिद्वन्दितया गुरूणां स्थातव्यमैन्द्रेपि पदे न तावत्।
न क्षुद्रहत्त्यापुरपजीवितव्यं हन्त्यात्मनोहा निरयप्रदात्री॥ २३॥

वने निवासोऽक्कतपौरुषाणां यद्यप्ययुक्तो नृपसम्भवानां।
पारत्रिकी पौरुषतेति युक्तस्तदत्र नः स्वारसिकः प्रयासः॥ २४॥

इति निश्चित्य——

निष्क्रम्य दूरं मृगयाछलेन छलादमात्यानपि वञ्चयित्वा।
प्रविश्य दुर्गाटविकां हिमाद्रेः क्वचित् कुटीं चक्रतुरम्बुकूले॥२५॥

अथैकदा तद्विजने जनेशो जातानुजातोजनकावगीतः।
विज्ञापयन् विज्ञतमः सुनन्दोभ्रातायजं भ्रातरमभ्यवादीत्॥२६॥

आर्य्य! दशामिमामावयोः पश्यन्विश्वकर्त्तुर्विचित्रां कृतिशक्तिमवधारयामि, यतोजगदानन्दकन्दस्य भगवतश्चन्द्रस्य वंशे समुद्भूतयोः सप्तद्वीपचक्रवर्त्तिनश्चन्द्रशेखरात्तरणिवंशावतारतारावतोजठरजातयोरधिगतसकलशास्त्रयोः प्राप्तपौरुषयोरपि पितुः सकाशादवधीरणायमकस्मान्महारण्यप्रवेशः। सत्यं, प्राक्तनकर्म्मणां प्रारब्धानां फलमपरिहार्य्यं, विषयफलानि फलानीव कालेन विरसानीव भवन्ति, सुखान्यपि दुःखबीजानीति; पश्य—उपभुक्तानि तानि स्मृतिपथमारुह्य पीड़यन्ति नत्वननुभूतानि तथाहि—

तैस्तैः शून्यमवस्थितं प्रियजनैः शून्यैव दृष्टिस्तया,
सम्पत्त्या परमेष्टया परिजनैः शून्याः समस्ताः क्रियाः।
शून्या स्नेहपरीतया श्रुतिरियं वत्सेति मातुर्गिरा
ध्यायं ध्यायमिदं मुहुर्जगदहो शून्यं समीक्षामहे॥ २७॥

अपिच—उद्यद्बालसुधारुचेरिव कलापूर्त्तिं समीक्ष्यावयोर्भूयः स्नेहपरम्परापरिणमत्प्रोत्साहलब्धोत्सवां।

तां दृष्टिं मम मातुरद्य विकलां वास्पावलिव्याकुला-
मन्तश्चिन्तयतोवत प्रतिपदं खेदेन विश्राम्यति ॥ २८ ॥

अपिच—वीरश्रीयुवराजराजनिवहाः चोणीमिलन्मौलय-
स्वामिते प्रणमन्ति मन्त्रिण इमे सेनाधिनाथाः परे ।
एते भृत्यभटा इमागजघटा दृष्टिप्रसादं कुरु
श्रीमन्नित्यनिशं शृणोमि न पुनर्वाचः प्रतीहारिणाम् ॥ २९ ॥

अपिच—श्रीमच्चन्द्रभृतः कुमारसदृशः श्रीमान् कुमारोजय-
तुग्रेरद्य मधुव्रतः शिरसि भो ! भूपास्तदाज्ञां कुरु ।
युद्धे शातिततातसोदरसुहृच्छोकचतं स्वान्तरं
मत्पादाब्जरजोभिरद्य शिरसा वन्द्यैः सुसन्धीयताम् ॥ ३० ॥

इति निर्जितप्रत्यर्थिपृथ्वीपतिषु नेदृशी लिखनपरिपाटी श्रुतिमानन्दयति ।

अन्यच्च—आखेटश्रमशान्तयेचणसुखं यस्येच्छतः सोत्सुकै-
र्भूमीपालतनूभवैः परिजनीभावङ्गतैः सङ्गतैः ।
स्वैः स्वैः प्रावरणैः पटैर्विरचिता चित्रा पुरी दृश्यते
स त्वं पर्णकुटीं स्वपाणिरचितामावस्तुमाकांचसि ॥ ३१ ॥

अन्यच्च—यो विश्रामगृहेपि तैः चितिभुजां विज्ञप्तिविज्ञापकैः
काव्यालापसकौतुकैरपि जनैः पूर्णोभवान् वीचितः ।
एकः पर्णगृहे निरस्तविभवः स त्वं कथं वर्तसे
नाद्य त्वां खलु कोपि पृच्छति जनः पश्यामि जीवन्निदम् ॥ ३२ ॥

प्रपन्नयोः स्वीयगुणोपपन्नयोर्निरागसोः प्राज्ञपितुः सकाशात् ।
कस्मादकस्मादवधीरणेयमागाद्वामकरीव हन्तुम् ॥ ३३ ॥

धर्मे स्थितान् प्राप्तनयान् समर्थान् श्रीरामधर्मात्मजनैषधादीन्।
तां तां दशां दर्शयतात्यदर्शि धात्रा बलं स्वं पुरुषप्रयत्नात्॥ ३४॥

विधातृवश्ये क्षणमात्रदृश्ये भोगे पुरः कालभुजङ्गदृश्ये।
स्पृहालुताकामतिमज्जनानां मुहुर्मुहुर्मोहनिदानदृष्टे॥ ३५॥

सुखानि दुःखैकनिदानभूतान्यतः सुसिद्धा नियतो दहन्ति।
हा हन्त शश्वत्स्मृतिमागतानि मोहात् पुरा भुक्तविषोपमानि॥३६॥

अगणय्य कृतान्तमुद्यतं हननायोत्सवसोत्सुकान् जनान्*।
अनुचिन्त्य च हासविस्मयौ हृदि कम्पोरुदितञ्च जायते॥ ३७॥

इत्वारातीन्बंधुमानन्द्य भूयो भुक्त्वा भोगानीप्सितानीह लब्ध्वा।
किंवा प्राप्तं पूर्व्वजैस्तैरशान्तैः किन्न प्राप्तं शान्तिसन्तोषभाजा॥३८॥

प्रतिहतसुखमानमेकचिन्तः, स्पृहयति नीतिविदत्र राज्यखण्डं।
यदि पुनरसुना भवत्यखण्डं, परमपदं किमतःपरं गरीयः॥३९॥

तैस्तैः क्लेशैः सत्कृतैर्दुष्कृतैर्वा मानं भोगान् योगिनेवेह हित्वा।
येयं भूतिर्लभ्यते सा दिनाद्धं विश्वास्या चेत् साधु सर्वं प्रयत्नाः॥४०

वञ्चयित्वा गता या नो रमा रामेव चञ्चला।
आगतायां पुनस्तस्यां कोविश्वासोऽथ का रतिः॥ ४१॥

अध्यापयन्ति नीतिज्ञा न विश्वास्याः स्त्रियः क्वचित्।
अविश्वास्याग्रगण्यान्ते विश्वसन्ति कथं श्रियम्॥ ४२॥

इयंतु चञ्चला चञ्चलेव क्षणरुचिर्जलमलिनशून्यहृदये प्रकाशते, स्वयं चपला स्वानुरक्तं स्तब्धं करोति, स्वयं वैश्रवणसंवर्द्धिनी परितोर्थिजनफूत्कारेषु श्रवणं नाशयति, धृतसुदर्शनसुदर्श-

* "स्वजनान् स्वदशाश्च ताः पुरीव्यपजातास इहाशयाधृतान्" पाठान्तरमिदम्॥

नापि स्वाधिष्ठानजनमन्धीकरोति बहुकण्टककोषान्तर्वर्तिनी कितवबीजावलिरिव समुपभुक्ता किलोन्मादकरी मधुद्विषः प्रियेति कटुकरसमुत्पादयति, जलराशिजातेति जडराशिष्वतिप्रीतिमती वसति, दोषाकरसहजेति दोषाकरेष्विव स्निह्यति। एनामाश्रितर मत्ताः प्रमत्ताः सुरासुरेन्द्रनरेन्द्राः कां कां विपदं नानुभूतवन्तः, कुलटेव पितुर्भोग्या सती पुत्रस्यापि भोग्या भवति, राजगृहाच्चाण्डालगृहमपि गच्छति, तेनेयं न साधुजनसंस्पृश्या, इयन्निपातायैव जनमूर्द्धमारोहयति, बालिकाबालुकाकन्दुकमिव।

विषयान्निर्वृतिं प्रेप्सुर्धावतेव मनोमृगः,
प्राप्ताप्राप्तेव सापैति मृगतृष्णाम्बुसन्निभा ॥ ४३ ॥

लब्धे वा विपुले राज्ये राज्येपि त्रिदिवौकसां।
किङ्करिष्यति मन्दात्मा यदि नात्मा प्रसीदति ॥ ४४ ॥

पूर्वं जाताः संश्रुता हन्त यान्तो दृश्यन्तेऽमी संविहायैव सर्वं।
अद्य श्वोवा दैववश्याः प्रयामो गेहैर्देहैः किंकिमन्यैश्च कुर्मः ॥४५॥

क्लिष्ट्वा क्लिष्ट्वा क्लेशकर्मादिपाकैः कष्टं कष्टं क्लिष्टकर्माचरन्ति।
दृष्ट्वा दृष्ट्वा लक्ष्यमाणं क्षणेन दृष्टं दृष्टं दृष्टमिच्छन्ति मूढ़ाः ॥४६॥

पीत्वा पीत्वा काममद्यं मदान्धो हित्वा हित्वा शासनं शासकस्य।
भित्त्वा भित्त्वा धर्महेतुं ह्यहेतुं हत्वा हत्वा मोहिताः संयतन्ति ॥४७

हायं हायञ्चामृतं ज्ञानसिन्धोः पायं पायं द्वेषरागोऽद्य मद्यम्।
गायं गायं ग्रामवार्त्तामपार्थां ध्यायं ध्यायंश्चेन्द्रियार्थान्दुनोति ॥४८॥

ब्रह्मादीनां शान्तया किं समृद्ध्या किं वा हन्त शान्तया योगसिद्ध्या।
तावद्यावच्चामिताज्ञाननिद्रा मुद्रां विद्रावेति नात्मप्रबोधः ॥४९॥

ह्यन्तानन्ता ब्रह्मकल्पव्रतीता ब्रह्माण्डानाञ्चापि माता व्यतीता ।
नेयं क्षुद्राऽज्ञाननिद्राय याता नैवायाता चात्मबोधप्रतीतिः ॥५०॥

भुक्तं सर्व्वं शान्तिरेका न भुक्ता दृष्टं सर्व्वं स्वस्य नैकं स्वरूपम् ।
लब्धं सर्वं निर्वृतिर्नैस्थिरैका त्यक्तं सर्वं नान्तरज्ञानमेकम् ॥५१॥

भुक्त्वा भुक्त्वा भूयसी भोगवाञ्छा दृष्ट्वा दृष्ट्वा दर्शनेच्छैति वृद्धिं ।
लब्ध्वालब्ध्वालभ्यमन्यत्समीहेध्यात्वाध्यात्वानिर्वृतिंनाभ्युपैमि ॥५२॥

भ्रान्त्वाभ्रान्त्वानापिकिञ्चित्प्रयामःस्वस्थंस्वास्थ्यंसन्त्यजामोभ्रमेण ।
पश्चासिद्धान्साधयन्तः श्रमार्त्तानात्मारामं साधयामः प्रसिद्धम्॥५३॥

मधुव्रतोऽब्रवीत्—भ्रातरेवमेव पश्य—

स्पृहा पिशाची पाशोऽयं चिन्ता वा तत्र राक्षसी ।
प्रमादस्तस्करः क्रूरोव्याधयोत्युग्रवृश्चिकाः ॥ ५४ ॥

मृत्युर्व्याघ्रो जरा व्याली रागद्वेषौ च दन्तिनौ ।
यस्मिन् संसारकान्तारे—तत्र का निर्भयस्थितिः ? ॥ ५५ ॥

असाध्वी धीप्रिया यत्र मनोबन्धुर्दुराशयः ।
अवशाश्चेन्द्रियगणास्तत्रवासोविनाशदः ॥ ५६ ॥

यत्र प्रियासुहृद्बन्धुविभवादिवियोगतः ।
निरन्तराणि दुःखानि—सुखाशा क्वैव तत्र ते ? ॥ ५७ ॥

गर्भे जन्मनि बाल्येच जरायां मृतुशङ्कटे ।
कृच्छ्रे कृच्छ्राण्यसह्यानि—कुत्र गन्तासि निर्वृतिं ? ॥ ५८ ॥

धर्म्मादपि समुत्पातोनिपातोऽस्ति च तत्क्षयात् ।
उत्पातपातनियते धर्म्मे—का शर्मधीस्तव ? ॥ ५९ ॥

अत्राज्ञानतमस्तोमे पौर्वापर्यमपश्यतां ।

सभये भ्रमतां भूयो—भीतिः कस्मान्न जायते ?॥ ६० ॥
व्याधिशोकार्तिमृत्यूनां कतमोवा पतिष्यति ।
चणोद्भ इति सङ्कोचैः सदा यत्र—क्क निर्वृतिः?॥ ६१ ॥
अधर्म्मवित्तसञ्चयाद्वियुज्यते महाधनैः ।
असद्यशः समीहया विगीयते च सज्जनैः ॥ ६२ ॥
कुभोगविन्दुलिप्सया वियुज्यते परामृतैः ।
परार्थचिन्तया स्वतः सुखादसौ वियुज्यते ॥ ६३ ॥
विभिन्नकुम्भतोयवत्सदायुरेति विच्युतिं ।
जरेति याति यौवनं कथं न पश्यसि स्फुटम् ?॥ ६४ ॥
समुत्थितं महाभयं पुरः कथं नबुध्यते ।
समुत्थितस्त्वरन् कथं भयादसौ न धावति ?॥ ६५ ॥
पुरा कृतान्तकिङ्करैर्दृढं निबद्ध नेष्यते ।
यमस्य तस्य दर्शनं भयाय कारयिष्यते ॥ ६६ ॥
ततोऽस्य घोरशासनात् प्रशास्य घोरशासनैः ।
ततस्तलातलादधः प्रशान्तसङ्कदुर्मिले ॥ ६७ ॥
असह्यवेदनामये तमोमये महाभये ।
अपुत्रमित्रवान्धवे चिराय पातयिष्यति ॥ ६८ ॥
क्षुधातृषातिपीड़ितोमुहुर्भटैः प्रताड़ितः ।
स्वकर्म संस्मरन् पुरा कृतं मुहुः प्रतप्स्यति ॥ ६९ ॥

ततोपि बहुवर्षयुगकल्पैरनल्पवेदनातोनिर्गतोदुर्गतिमेव भजते, तरुलताकृमिकीटादिषु जायमानोम्रियमाणः कदाचिन् मानुषत्वं प्राप्नोतिचेद्बहुतररोगशोकदारिद्र्यादिभिर्दयमानोम्लेच्छपुष्कसादि-

योनिषु भ्रमन् जन्मशतेन यदि द्विजातिर्भवति मोक्षाधिकारी तत्रापि दुःखभागी दुर्दैववशः कामक्रोधलोभमोहमदमात्सर्य्यादिभिः पुनरपि पापं कुर्वं स्तत्रैव पतति तिष्ठतु नारकी सुरलोकादपि कामी—क्षीणे पुण्ये पतत्येव, तस्मात् क्वापि न निर्वृ ति—इति पश्यन्नपि न बिभेति जनः अहो मन्दप्रज्ञता! अहो मन्दभाग्यं!येनेदृशीं मत्यां बतिं मुहुर्गमयति, इत्थं श्रुत्वा सुनन्दः प्रत्युवाच——

अविनाशिन्यविश्वस्ता विश्वस्ताः क्षणनाशिनि।
भ्रातः! किमिते विश्वास्या विश्वमायाविमोहिताः?॥ ७०॥

माययोन्मादिताह्येते सुरयेव सुदुर्बलाः।
प्रबोधिता न बुध्यन्ते निवर्तन्ते न ताड़िताः॥ ७१॥

शृखतां निरयान् घोरान् पश्यतां जनदुर्गतीः।
भुञ्जतामपि दुःखानि न भयं जायते नृणाम्॥ ७२॥

श्रुत्वा गर्भकथां व्यथाश्च नरके प्राणप्रयाणे महाव्यामोहञ्च विलोक्य तत्तदसुखं भूयोऽनुभूय स्वयम्।
यत्तत्कारणमेव कर्म मलिनं कामान् मुहुः सेवते,
तत्सम्मोहमदेन वञ्चितमतिर्लोकः समालोक्यते॥ ७३॥

उन्मादं मदनेन दुर्दमरुषा दाहं मदैर्मूढ़तां
शोषं दुर्घटलक्षणया सुदृढ़या लोभादतुष्टिं सदा।
मात्सर्य्येण च मर्म्मकृन्तनरुजं प्राज्ञाभिमानाज्जनाः
सेवन्ते हि सुखाशया स्फुटमहो! मोहाभिभूता इमे॥ ७४॥

सच्छिद्रामधिरुह्य देहतरणिं कर्म्मानिलव्याकुलां
कामक्रोधतरङ्गवेगविहतां कालान्तकाङ्कीकृताम्।

मोहाम्भोधिजले जरास्मृतिमहाग्राहे निमज्जन्नपि।
क्रीड़त्येव हि निर्भयं कथमहो मोहो महानीदृशः! ॥ ७५ ॥

क्रामन्तुग्रगिरीं स्तरन्ति जलधिं धावन्ति देशान् बहुम्
यस्यार्थे सच न स्थिरोऽस्य विभवो लाभोऽस्य सन्दिह्यते।
अस्त्यन्तः परमार्थ एष परमात्मानन्दपूर्णोऽव्यय-
स्तद्धेतोर्यतते मनागपि न किं?—हा हन्त मूढ़ोजनः!! ॥ ७६ ॥

मर्त्यं जीवनहेतवेऽथ विषयप्राप्तैः तदाशाहतं
सौख्यार्थं बहुदुःखमञ्जनमहो संसेवितुं सोत्सुकः।
श्रीमृत्युञ्जयमाप्तकाममखिलाधीशं हृदिस्थं शिवं
पूर्णानन्दमहो न याति शरणं—मोहः कथं दृश्यताम् ॥ ७७ ॥

अन्तः शीतलमन्तिके विजयते भावैकपेयामृतं
स्वच्छन्दं शिवनामधाममहसां निश्शेषतृष्णापहं।
वेदैः कीर्त्तितमच्छतीर्थसुगमं हित्वातिमोहाद्रसैः
शून्येऽस्मिन्मरुकाननाभविषये तृष्णातुरोधावति ॥ ७८ ॥

स्वल्पे स्वल्परसे सदा परवशे दुःखोत्तरे भङ्गुरे
सम्मोदे विषयोद्भवे ममतया लोकः स्पृहाव्याकुलः।
आनन्दं परिपूर्णमन्तरहितं स्वात्मानमेकं शिवं
शान्त्या स्वीकुरुते न कोपि किमहो मोहोमहानीदृशः!! ॥ ७९ ॥

आशापाशशतेन बद्धमबलं विद्धं मनोजेषुभि-
स्तृष्णावाततृणीकृतं ज्वलदिव क्रोधाग्निदग्धानलम्।
मूढं मोहमदेन हन्त! रहितं वैराग्यसद्बन्धुना
जीवं जाल्ममनीश्वरं प्रकुरुते शश्वत् कृतान्तोवशे ॥ ८० ॥

बध्वा गले प्रबलकालविकृष्यमाणाः
कुत्रापि न क्षणमपि स्थितिप्राप्नुवन्तः।
उद्यानभूमिगृहदारजनार्जनोत्का:
खिद्यन्त एव मनुजाः प्रबलो हि मोहः॥ ८१॥

किन्नागैस्तुरगैरगाकृतिमहत्प्राकारसङ्केवृंतो-
मित्रैश्चित्रकथैः स्मयन्विहरति स्त्रीभिः सुतैः क्रीड़ति।
श्रीमृत्युरञ्जयपादपदुर्गशरणं नामस्य हा छिद्रवित्
हन्तात्यन्तसुदुर्जयोविजयते कालः करालोरिपुः॥ ८२॥

किं दारबन्धुविभवेन सुसंभृतेन किंभोगपुष्टतमपुष्टकलेवरेण।
किं सञ्चितैर्गुणगणैरमितैर्यदेष कालोऽखिलं खलु हरिष्यति नाति-
कालात्॥ ८३॥

आर्य्य! पश्य—भुक्ताः स्त्रियोऽनुकूलाश्च भुक्ता भूर्विजयश्रिया।
भुक्ताः स्तुतिसरस्वत्योर्नाद्याप्येति कृतार्थता॥ ८४॥

निहताः शत्रवः शश्वत् क्षुत्पिपाशासमोपमाः।
पुनरनेत्र समायान्ति किं कृत्वास्तु कृतार्थता॥ ८५॥

पुनः प्रातः पुनः स्नानं पुनर्ग्रासः पुनर्निशा।
पुनर्निद्राजागरणे—कदाचिरसुखस्थितिः?॥ ८६॥

दृष्टमेव हि पश्यामोभुङ्महे भुक्तमेव हि।
लभामहे लब्धमेव नापूर्वं किञ्चिदाप्नुमः॥ ८७॥

वयं प्रमत्ताः स्वपामोऽप्रमत्तः कालतस्करः।
न रक्षायां व्रतोदेवः सर्वदृक् किं भविष्यति?॥ ८८॥

तस्मात्समुत्तारयितारमस्मान्महाभयापारगभीरसिन्धोः।
कं ज्ञानविज्ञानगुरुं गुरुं द्रागासादयामोऽद्य दयासहायम्॥८९

अप्यत्रिपादादिसुसाधनानां न वर्त्मवेत्तारमृते गतिः स्यात्।
तस्माद् वयं सुश्रुतदृष्टतत्वमन्वेषयामोगुरुमात्मसिद्धै॥ ६०॥

अस्मिन् संतारकाः प्रतारकाश्च बहवः सन्ति, तद्विद्यावृत्त्यनुभवप्रसादान् परीच्य समाश्रयणीयाः प्रज्ञातरणिं वितरणभवसिन्धुं तारयन्त्येके, आशावाग्भिर्बहुधा खला इवोत्थैः प्रतारयन्त्यन्ये, अपिसन्तरणसमर्था भवसिन्धौ सन्निमज्जन्ति, विषयेण संप्रमत्ता उन्मत्ता इव सुगाढ़मदेन यस्तरति स तारयति च, योमज्जति मज्जयत्येव स्वानुगतान्—भवसिन्धौ नौरिव सुदृढ़ा स्वसाधनैर्हीना श्रुतबहुशास्त्रानुभवरहितान् अज्ञान् न यातु संयामः, खनिपे न मणिपरिचाशिचायै यान्ति धीमन्तः, अज्ञः शास्त्रं चुम्बन् न तद् रसं तावदनुभवति, अधररसं दयिताया विट इव दंशे न जानाति—एवं विचारयन्तौ तौ तत्तपोवने विचेरतुः॥

तस्मिन्वने दैववशेन देव्यां सञ्जातकामादुपजातभीतिः।
कपोतनामा मुनिरात्मसिद्धै तपश्चचारात्मविनिग्रहेण॥ ६१।

तं तावुपेत्य पणिपत्य भूयः, पप्रच्छतुः स्वच्छहृदा स्फुरन्तं।
सदा मुदात्ममननैकशीलं, मुनिं मुनौ वावनिनाथपुत्रौ॥ ६२॥

तावूचतुः—
प्रमादजाज्ञानजहीनशक्तिजान्यनिच्छतापि भवन्त्यघान्यलं।
सवज्ञता वा न च सावधानता न शक्तिमत्तापि जनेऽस्ति तादृशी॥

अत्यल्पपापे चिरदण्डदर्शनाद्धाताप्यतिक्रूरइवावभाति।
दुष्कर्मणां हा गहनोविपाकोमोक्षःसू परं क्षमतया दुरापः॥६३॥

अवाप्य तैस्तैश्च तपःक्रियाश्रमैश्चिराद्दिवं संपततीह भूयः।
इत्यादिसंचिन्त्य वयं विचेतसोभयेन मोहेन विनष्टसत्वाः ॥९४॥
[ एकान्ततोऽत्यन्ततया च दुःखहानावुपायं परिमार्गयामः ]
जनिमरणजरावियोगरोगैर्निरयगणैरतिदुर्गमे गभीरे।
अविदितपरपारभीमे भवजलधौ पतिताः निमज्जयामः ॥९५॥

तदिह भयवशादतीव दीनस्तव चरणद्वयमाश्रितोऽस्मि भक्त्या।
शरणमनुगतं प्रशाधि शिष्यं कुरु कृपयैव भयाम्बुराशिपारं॥९६॥
उवाच तौ तत्सुमतिप्रसादितौ हृदोदितोदारदयोमहर्षिः।
विषीदतां मानविषादयोग्यौ भीतौ भयेभ्योविषयान् जिंहासू॥९७॥
करोति पापं विषयाशया हि न तज्जिहासुः कुरुते निषिद्धं।
करोति चेद्दैवबलात् प्रमादादज्ञानतोनास्य तथापराधाः॥ ९८॥
पश्चात्तापात्संसदि ख्यापनाच्च त्यागाज्जाप्याद्दानतश्चोपवासात्।
तीर्थस्नानावासयात्रात्मचिन्तायोगाद्योगाद्वा प्रयात्यन्तमंहः ॥९९॥
संख्याघानां दुष्करा देहभाजां प्रायश्चितं दुष्करं तेन मन्ये।
तस्माद्ब्रह्मज्ञानभक्ती विहाय प्रायश्चित्तं नांहसां सम्यगस्ति ॥१००॥
पापारम्भेनानुतापी प्रहृष्टः पापं कृत्वा निष्कृतिं नार्हतीह।
भुक्त्वा कृच्छ्रं हन्त! जन्मान्तरेऽपि कृत्वा पापं तापमेष प्रयाति॥१०१॥

प्रायश्चित्तमकामात् कृते निषिद्धे सकामतोपिएके निगदन्त्यनुतापादानु ननु पापेभ्योनिवृत्तशीलस्य, यदुक्तं — 'धाता अल्पपापे अतिदण्डं विदधाति'—इति, तन्न;

विचार्य्य कालं हृदयं च शक्तिं नृपस्तदंशोपि तनोति दण्डं।
अज्ञः स सर्व्वज्ञतमोन किं स्यात्? विचारविज्ञोविधिरीश्वरात्मा॥

शिवनुग्रहेणैव विशुद्धसत्त्वात्सर्वज्ञतां सर्वदयाश्रयत्वात्।
समुद्धरत्येव जगत् क्रमेण क्रीड़न् स्वशक्त्यात्मविनोदमूर्त्त्या॥१०३॥
शिवाङ्घ्रिबाहिन्यशुभां न याति गतिं मतिस्तन्मतिमांस्तथैव।
प्राचीं व्रजन् किं व्रजति प्रतीचीं तस्माद्भवेत्तात! शिवाङ्घ्रिपाद्यः॥१०४॥
यन्नामकीर्त्तनमपि प्रथितान्तरायं पापं महत्तदपि हन्त्यमितायमानं।
शान्तिम्प्रयच्छति तदैव तदाश्रितस्य किं दुर्गतिर्विषयसङ्गपराङ्-
मुखस्य ॥ १०५ ॥
सकृत्प्रपन्नाय भवार्त्तिभीरवे तवाहमित्येव च साधुवादिने।
असम्प्रदायेष्टफलं सुनिश्चलं निवर्त्तते नेशकृपा सुनिश्चला॥ १०६
तस्माद्विदन्! तद्विहितं हितं चरन् यतस्व संसारभयापनुत्तये।
मतिं सतां सङ्गमजां श्रितानां प्रयत्नभाजां किमिहास्ति दुर्लभं॥१०७
परमेशपदं प्रयात्यहो!! मतिमांस्त्यागबलेन दुर्लभं, विमति-
र्बहुसङ्ग्रहेण हानिरयं शश्वदवाप्य मुह्यति॥
कुमारावूचतुः—
हिताहितं चैकपदेन संदिश श्रेयश्च देयश्च परं प्रहेयं।
कार्य्यं तथाकार्य्यमथोनिवार्य्यं धार्य्यं तथाधार्य्यमथावधार्य्यं॥१०८॥
शास्त्रं गुरुं कीदृशमाश्रयेद्वा? सेव्यश्च किं दैवतमात्मसिद्धैः?।
अन्वेषितव्यश्च किमेकमन्तर्नान्वेषितव्यश्च भयाभये च?॥ १०९ ॥
मुनिस्तावववादीत्—
हिताय चैकोविहितोविधात्रा धर्म्मोऽत्र निश्शेषपुमर्थहेतुः।
स एक एवात्र हितोजनानां संरक्षितोऽरक्षणतोहितः स्यात्॥११०॥
साम्यं ध्यायेदेष धर्मोहि मुख्योवर्णाद्युक्तश्चापि धर्मोद्वितीयः।
इष्टापूर्त्तश्चापि धर्म्मस्तृतीयस्सर्वत्रोच्चैर्भक्तिधर्म्मस्तु सिद्धैः॥१११॥

वर्णाश्रमोक्तं चर धर्म्म मेनं सदा सदाचार-परो भवोच्चैः।
सदा विशोते चरिते हि तेषां धर्म्मो दुरूहोऽपि समूहनीयः॥११२॥
स सर्व-सन्धारणतो हि धर्म्मः सर्वस्य शास्ता परमेश्वरात्मा।
धर्म्मो न चेडारयतीह लोकं भवे दमर्थ्याद मिदं समस्तम् ॥११३॥
धर्म्मार्थ मर्थं वृणुयाच्च कामं राग-क्षयायैव न भोग-हेतोः।
धर्म्मन्तदाज्ञा-परिपालनार्थं चरेद्विशुद्धै न च काम-हेतोः॥११४
ज्ञेयं परं वन्ध-विमोच-तत्वं सदा जनाना मभयं प्रदेयम्।
अज्ञानमन्तः सुविचार्य्य हेयं ध्येयं सदान्तः परमात्म-तत्वम्॥११५॥
कार्य्यं सदार्य्याचरितं विशुद्धं कदाप्यनार्य्याचरितं न कार्य्यम्।
धार्य्यं गुरोर्वाक्य मधार्य्यमन्तः परापवादादि-कुतर्कितञ्च ॥११६॥
सदा निवार्य्याः करणादयो हि सदावधार्य्यं परमार्थ-शास्त्रम्।
यच्छ्रेयसे शास्ति तदेव शास्त्रं श्रेयो हि मोक्षाम्न परं प्रतीमः॥११७
धर्म्मार्थकामान् पुरुषाः पुमर्थान्मोक्षञ्च तत् तत्व-विदोऽन्त्यमेव।
वदन्ति पूर्वेषु विलोक्य शश्वदुत्पात-पातादि-भवञ्च दुःखम् ॥११८॥
वैद्यो गदाना मिव मूलहन्ता गुरुर्निषेव्यो भव-मूल-हन्ता।
अपथ्य-भोगी कुधियादिशत्तावनर्थरूपौ खलु तौ मतौ नः ॥११९॥
अरेर्जयो नैव न भोगसम्पन्न वाऽणिमाद्याः खलु सिद्धिसंज्ञाः।
तामेव सिद्धिं सुधियः स्मरन्ति यया सुसिद्धेऽद्धृदये परात्मा ॥१२०॥
गुरुः स एकः स सुहृच्च शास्त्रं तत् सा मतिस्तद्धृदयं विशुद्धम्।
यच्चाश्रयं शोक-विमोह-हीनं शिवं परं प्रापयति स्वरूपम् ॥१२१॥

अध्यापकाद्दशगुणो हि पिता पितुश्च-
माता ततो गुरुतरो गुरुरेव साक्षात्।

ब्रह्मप्रदो वपुषि सं प्रभवन्ति चैते
वेदाग्नि-दैवत-वरत्रय एतएव ॥ १२२ ॥

एषां विनानुमतितो मतितोऽपि दक्षो
नैव त्रिवर्ग-चरणाय भवेत् स्वतन्त्रः।
एते त्रिवर्ग-फलदा स्त्रिदिव-प्रदाश्च
संसेविता गुरुरमोक्षपवर्गदोऽपि ॥ १२३ ॥

माता पिता सुहृदधीश्वर एष देवः
शास्ता प्रशस्त-सुख-हेतुरभीष्ट-दाता।
पाता हरश्च विपदा मपदं भयानां
साक्षाच्छिवो गुरु रसौ धृत-मर्त्य-देहः ॥ १२४ ॥

निन्दां गुरो रथ निशम्य हितं निहन्या-
च्छंकान्वितो यदि न चेच्छ्रवणे पिधाय।
यो नान्यतो व्रजति तं प्रशमीक्ष्य नेत्रे
संमीलये दथ रविं प्रशमीक्ष्य शुद्धेरत् ॥ १२५ ॥

आधि-व्याधि-निदान-देह-जनकस्तात स्तथैव प्रसूः,
भोगांशा नपहर्त्तु मेव हि सुहृद्रूपाः खला बान्धवाः।
चेतः-स्वास्थ्य-हरी कलाभि रबला सर्वस्व-हारी सुतः,
स्यादेकः परमार्थ-बन्धु रनघः श्रीमान् गुरुर्मोक्षदः ॥१२६॥

एको हि देवः क्रियया सभक्त्या प्रेमार्द्रया ज्ञान-बलेन सेव्यः।
यतः समस्तं खलु यत् समस्तं यमेव विज्ञाय विमुच्यते हि ॥१२७॥

अन्वेषितव्यं त्वभयं पदं तत् तस्मादृते नास्ति गवेषितव्यम्।
मोक्षादृते नास्त्यभयं कदापि कामादृते नास्ति भयं जनानाम् ॥१२८

तत्सङ्गतोऽसङ्गपदन्त्वमेहि न कामि-सङ्गो मनसापि कार्य्यः ।
सङ्गो हि कामाय स काम एकोऽनर्थाय मोक्षार्थहरोऽतिशत्रुः॥१२९

कामादयोऽमी हृदयाधिवासाः सवक्ष-नाशाय भवन्ति नान्ये ।
दुर्गाणि सन्त्यन्य-रिपु-प्रबाधा गुप्त्यै न चैषां दिवि भूतलादौ॥१३०॥

कामादि-शत्रून् करणैः समेतं जित्वा जयी स्यान्न विजित्य शत्रून् ।
बाधन्त एते खलु निर्जितारीन् जितेषु चैतेषु न शत्रु-बाधा॥१३१॥

कामादयः सन्ति च सन्तु देह-धर्म्मा इमे नैभि रकार्य्य मल्पम् ।
कुर्वन् जनो याति गतिं यतीनां जितेन्द्रियोऽसौ विजितेन्द्रियाणाम्॥२

भोगांश्च कीर्त्तिं त्रिदिवाधिवासं कामादकामान्मनसो विशुद्धिम् ।
मोक्षाय कर्म्मैव ददात्यकर्म्म विकर्म्मणो रोग-भयादि-कृत्स्नम्॥१३३॥

कामाय कामाय भवेद्विमुक्त्यै भवेद्विमुक्त्यै विहितं हि कर्म्म ।
कृच्छ्राय कृच्छ्राय तथैव कृत्स्नं कृतं फलं यच्छति नान्यथा स्यात्॥३४

तस्मात् स्वकर्माच्च भजेति चोक्तौ पुनः कुमारौ मुनि मूचतु स्तम् ।
वर्णाश्रमाचार-विधिं वदेति ततः प्रहृष्टो मुनि राह भूयः ॥१३५॥

वर्णाश्च चत्वार इह प्रसिद्धा स्तद्वर्ण-साङ्कर्य्य-भवाः परे च ।
म्लेच्छाः पुनर्द्धर्म्म-वहिष्कृता ये व्रात्या असंस्कारा-स्त्रयाद्भवन्ति॥१३६

चत्वार एवाश्रम-नामधेया ज्येष्ठे क्रमादक्रमतोप्यरागात् ।
द्वयोस्त्रय स्त्वाद्य चतुर्थ एको गृहाधिवासो विपिने निदेशात्॥१३७॥

भर्त्तुर्वनेऽप्यग्रज-सेवयैव सिद्धि र्न चान्यो विधिरस्ति तेषु ।
स्याद्ब्रह्मचारी गुरु-वास-निष्ठो गृहाभिलाषी द्विविधो द्वितीयः॥३८

पत्न्या द्वितीयोऽष्टषडब्दतोऽन्त्यो कुतीर्थं वसेद्वाटति वा द्वितीयः ।
पत्न्या व्रजेद्वा विपिनं तपस्वी हित्वा व्रजेत्ता मथवा यतिस्तु ॥१३

कुटीचको वाथ बह्वदको वा हंसो भवेद्वा परमादि-हंसः ।
पूर्वो जपाग्निद्व्यतिसंस्कृतः सन् मैत्रोऽथ जैत्रो जन-पालनेन॥१४०॥
चत्रोऽपरो धर्म्म-धनार्जनेन शूद्रादि रेषां परिचर्य्ययैव ।
त्रयस्त्रिकर्म्माण इमे हि कर्म्मठाश्च कर्म्मकृच्छ्रौत विधानतः स्यात्॥४१
त्रि-वृत्ति राद्योऽथ षडंश-वृत्ति र्भवेज्जनानां परिपालकोऽपि ।
कृषिं कुसीदं पशुमेव जीवेद्वैश्योऽवशेष-प्रभु-शेष-वृत्तिः ॥ १४२ ॥
शिलादि-वृत्त्योत्तमयैव जीवेत्प्रतिग्रहं नातिधनाय कुर्य्यात् ।
शक्तोऽपि-विद्या-तपसेतरस्तु दात्रा समं नश्यति हन्त ! विप्रः॥१४३
द्वितीयतार्त्तीयिकताञ्च जीवे दाद्यो विपद्यन्त रजः प्रजाभ्यः ।
भवेच्चतुर्थांश-हरोऽपि सर्वं गृह्णन्ति नश्यन्तु जनेषु शस्तम् ॥१४४॥
वाणिज्य-शिल्पादिभि रप्यजीवन् जीवेन्न मद्यामिष-चर्म्म-लौहैः ।
रङ्गावतारी न च रूप-जीवी भवेदपूर्वो विपदि त्रिपूर्वः ॥१४५॥
पतेद्द्विज-स्त्री-गमनाद् विवर्ण-सिद्धान्न-कन्या-ग्रहणेन शूद्रः ।
श्रुति-श्रवोच्चारणतो द्विजाना मवज्ञया कापिल-दुग्ध-पानात्॥४६
विधि र्न येषां विहितो विधात्रा स्वाध्याय-यज्ञादिषु नो निषेधः ।
श्राद्धादि-यज्ञेष्वथ पौष्टिके च निर्मन्त्रके संविहिते पुराणैः ॥१४७॥
ब्रह्मावेद्या ब्राह्मणानां न चान्यो वित्तावेद्या धर्म्मतश्चोरुजानाम् ।
स्त्री-शूद्राणां पति-सेवैव नान्यो राज्ञां धर्म्मः सर्व-धर्म्माद्यवेद्या॥१४८
विद्यार्थी स्यान्नित्य माचार्य्य-सेवी गेहस्थः स्यात्संविभाग्यातिथेयः ।
एवं वन्यै स्तापसः स्यात्सवन्ये रात्मा ह्येको ध्यान-सेव्यो यतीनाम्॥५९
गेहस्थोवारण्यको ब्रह्मचारी स्वं स्वं धर्म्मं संश्रितो भिक्षुवद्यः ।
मोक्षाकाङ्क्षी ह्याचरन् ध्यान-यज्ञं मोक्षं गच्छेत् काम्य-धर्म्मान्निवृत्तः॥

द्रव्येष्वना मर्थदो द्रव्य-यागो नास्ति द्रव्ये कश्चिदर्थो मुमुक्षोः ।
नित्य-ज्ञान-ध्यान-शान्त्यादि-यज्ञै र्यज्ञैरिष्ट्वा ते गतिं सम्प्रयान्ति ॥१५१

नैवास्त्यन्य-ज्ञान-योगात्पवित्रं पापादिभ्यः पावनं वा जनानाम् ।
मोक्षे साक्षात्साधनं नान्यदस्मात्तस्मात् ज्ञानं सर्वदा सर्व-सेव्यम्॥५२

श्रेष्ठा भक्ति र्ज्ञान मित्युक्तमस्ति ज्ञानं योगः स्थापणं सत्तपश्च ।
ज्ञानी भूयो नो पतेत् क्लेश-मध्ये चक्षुष्मन्तो नैव कूपे पतन्ति॥१५३॥

दृष्ट्वाऽऽदत्ते निधि मस्मिन् सचक्षु र्यद्वत् तद्वत् ज्ञान-चक्षुर्विलोक्य ।
शुद्धात्मानं निधि मादत्तएव यं लब्ध्वान्यन्नैव लब्धव्य मस्ति ॥१५४॥

वेदै र्बोध्या ब्राह्मणाः सन्निवृत्ता अन्ये ऽपि स्युस्तारतम्या द्द्विजाद्याः।
शूद्रं स्मृतया बोधयेद्भाषयान्यान् ते मुच्येरन्विक्रमाद्वा क्रमाद्वा ॥१५५

जेष्ठाज् ज्ञानं प्राप्नुयात् ज्ञान-निष्ठं वेदान्तोक्तं ब्राह्मणाद्ब्रह्म शिक्षेत् ।
ज्ञानज्येष्ठान्म्लेच्छतोऽप्यात्मलाभः किं शितघ्नो न श्मशानस्थितोऽग्निः ॥

अविक्रियं निष्क्रिय मात्मतत्वं विदन् कथं विन्दतु कर्म्मसङ्गम् ।
सकर्म्मणो जन्म-सुखासुखे च मुक्तास्ततस्तत्त्व-विदः स्वभावात्॥१५७

मोक्षो हि यज्ञादिभि रप्यवाप्यः परम्परा ज्ञान-बलेन साक्षात् ।
तज् ज्ञान मेकं सदुपाय-जातै रवाप्यते सद्गुरु-सेवनेन ॥ १५८ ॥

प्रहीन-कामोऽप्यलसः क्रियासु तथाप्यधर्म्मात्म-रतोऽल्पवित्तः ।
अकार्य्य-कर्त्तान्तरनर्थ-लोलुपो विमूढवन्मूढ-चरो हि विद्वान्॥१५९॥

प्रणाम-संप्रश्न-निसेवनाद्यै स्तं शुद्ध-बुद्धैरव चिरम्प्रसाद्य ।
ज्ञातव्य मेतत् स-रहस्य मात्म ज्ञानं स-विज्ञान मपास्त-दोषैः ॥१६०

वदन्ति धर्म्मं बहु-शाख मन्ये नाना फलं चैक-फलन्तु शुद्धाः ।
शुद्धं स्वधर्म्मं परमेश्वरार्पण-क्रिया-परा नित्य मिहाचरन्ति ॥१६१॥

सर्वेषामेव स्वकुलागत-सदाचार-पालन-गुरु-परिजनानुगत-दीनादि-संविभाग-सत्य-शौच-सदाचार-सन्तोष-तितिक्षा-ऽतिथि-पूजन-श्राद्धकर्म्म-ब्रह्मचर्य्या-ऽहिंसाऽनसूयाऽक्रोधाऽप्रमादाऽनृशंस्य-सत्तीर्थानुसरण-सर्वेन्द्रिय-निग्रह-सर्व्वभूतदया-दयाक्षतदान-देव-ब्राह्मणनृपादिसाधुसम्मान-सत्संगजनितविवेक आत्मज्ञाननिष्ठा-योगाभ्यास-विषयानभ्यास-सततान्तरन्तराय-चालन-परमाभिमत-प्राप्ति-कारण-परमेश्वर-कीर्त्ति-कीर्त्तन-श्रवण-स्मरण-सेवन-दास्य-वन्दन-यथासम्भवार्च्चन-सख्य-स्वार्पणादि-रूपो भक्ति-योगो भवति परमेश्वरे सर्वज्ञे सर्वशक्तिमति परमात्मनि परमश्रेया-निति॥

सर्वैरेव स चाराध्यः स्व-स्व-कर्म्म-समर्पणैः।
प्रायश्चित्तै रपि यथा शक्त्या पातितर-दूषितैः॥१६२॥

ये ये धर्म्माः पापिनां पाप-शुद्ध्यै ते ते सद्भिर्लङ्घनीया न जातु।
एतेनैवाराध्यते कर्म्मणेश स्तस्मादेषं पालयेद्धि स्व-शक्त्या॥१६३॥

जातं पापं परिषदि वदेत्तन्निदेशाद्विशुद्धे-
च्छुद्धे शुद्धा प्रसरति मति स्तद्गति श्चेतरे तु।
पापा बुद्धि र्गति रपि तथा पापत स्तेन शुद्धिं
कुर्य्याद्यत्नै र्हृदयवपुषो स्तत्र नोदासितव्यम्॥१६४॥

धर्म्मार्थं भवति यउद्यतः स्वशक्त्या दैवाच्चेन्न स घटते तथापि तस्य।
तद्धर्म्मो भवति हि तेन यत्नवान्स्याद्धर्म्मार्थैर्न पुनरपाय चेतसि॥१६५॥

नो वर्णाश्रम विहितेतरोत्तर भूयश्छ्रेयोर्थी न खल विनाश्रमेषभूयात्
सन्न्यासाच्युतविहिताश्रमश्चभूयात् नो जात्याश्रमविमुखस्य दुष्यतीशः॥
सर्वारम्भादोषसम्भाविता हि ते संख्यातत्राः सिद्धासिद्ध्या च भूयः।

तस्मात् सद्भि स्वाविगीतामहत्त्वा यत्तोजीवे त्वाप्यसिद्ध्यानुतप्येत्॥१६७

आर्त्तानां इतमतिभीतिरक्तसुधार्द्दै-
नित्यं स्यादवनपरो दयाभिरद्यैः।
आर्तिघ्नो भवति कदापि नातियुक्तः
प्राणैः स्वैरपि शरणार्थिनो हि पायात्॥ १६८॥

गौर्गङ्गागिरितनयारमागुरूणां ब्रह्मेशाच्युतमहसां परासनत्व।
बुद्धः स्या त्रियत मभेदभावशुद्धो ह्येदं व्रजति हृदात्र भेदभावैः॥

आरब्धं न हि परिहरेत्सुरादिभक्तिं नित्यत्वात्तदकरणेन पातकीध्यात्
ो देवं स्वमिह विहायवान्यदेवं मूढत्वादति व्रजते च्युतो द्वयोः स्या ॥

पाखण्डादपि च शुभागमाविरुद्धं
गृह्णीयान्मणिवदमेध्य-मध्यतोपि।
नादद्यात्क्रु तिनिलयाभिचारमुख्यान्
घोराब्धेरहह हलाहलं स्वैव विद्वान्॥ १७१॥

मौन्यन्तःकरणजयी स्वभावशुद्धः
सौम्यः स्यात्सततमनः प्रसादयुक्तः।
स्वाध्यायप्रियहितसत्यवाक् च भूया
त्नोद्वेगप्रदमपरस्य तात! वाच्यम्॥ १७२॥

एतत्ते हृदयवचः क्षतन्तपःस्या
च्छारीरं द्विजगुरुदेवधीमदर्चा।
शौचञ्चार्जवमविहिंसनं जनाना
मुत्पीड़ं तपदह मात्मनो परस्य॥१७३॥

निर्व्याजं द्विजगुरुदेवतातिथीनां
सेवी स्यात स्वविभवतस्तदात्मबुद्या।

स्वैर्भोगैरपि च यदृच्छयोपलब्धै

रात्मानं तमथ यजेत्स एक आत्मा ॥ १७४ ॥

भावं कुर्य्यात् सर्वभूतेषु साम्यं पूजां कुर्य्यात्तारतम्याद्विधानैः।
आज्ञां धातुः पालयन् पालयंश्च साम्यं साम्यं सोम्य! योगं स्मरन्ति॥

सत्वस्थो व्रजति दिवं नरो रजस्थस्तिर्य्यक्त्वं तमसि मृतस्तथा चलत्वम्।
विज्ञानासुखपरिमोहयोनयोऽमी तद्भूयात् सततविशुद्धसत्वसंस्थः ॥

एतेषां गतिमवलोकयन्नुदासो

निःसङ्गो भवति यति गुणैरतीतः।

निष्पन्दो व्यपगतहर्षदुःखमोहो

नैष्कर्म्यां व्रजति गतिं भवेन्न भूयः॥ १७७ ॥

नित्यं चित्तं वासयेत्तत्स्वभावैः

श्रद्धा भक्ति-ज्ञानयोगांश्च युञ्ज्यात्।

निःसङ्गः स्यात् सर्वदा कर्तृभावैः

कृत्यञ्चैतत् कृत्यमन्यद्भयाय॥ १७८ ॥

यच्चित्तः स्यात्पुरुष स्तन्मयः स्या

द्गुह्यं चैतत् तेन भूयात् सुचित्तः।

यो यच्छ्रद्ध स्तन्मयश्चापि भूयात्

श्रद्धातव्यं तेन सच्छास्त्रदृष्ट्या ॥ १७९ ॥

वाचोदद्याच्चक्षुषो चापि दद्यात्

श्रोत्रे दद्यान्मानसञ्चापि दद्यात्।

जाप्ये रूपे कीर्तने तत्स्वरूपे

दुःसंस्कारस्यावकाशं न दद्यात् ॥ १८० ॥

मूढ़ाविशैः संशयानैः कुतर्कैः
सम्पर्की स्यान्न चणं भावदुष्टैः।
अस्पृश्यः स्यात् स्पर्शमात्रात्सुरायाः
स्रोकृतायाः प्रपतेद्बिन्दुमात्रम् ॥ १८२ ॥
दुर्गन्धिः स्याद्वस्तुदुर्गन्धयोगा-
द्दल्पेनाल्पं भूयसा तन्मयत्वम्।
सद्गन्धस्याप्येवमेवेति मत्वा
सत्सङ्गी स्यान्नैव दुःसङ्गदुष्टः ॥ १८३ ॥
ज्ञात्वा ज्ञात्वा वाग्भि रुक्तै र्गुरूणाम्
भुक्त्वा भुक्त्वा कालकूटं कुभोगम्।
भूयो भूयो ये प्रवृत्ताः स्वनाशे
किन्ते सङ्गान्नापरान्नाशयन्तु ॥ १८४ ॥
ह्येयादेयत्वेन वा यस्य सर्वम्
यस्मात् प्रेयान्नापरः स्वन्तमन्तः।
हित्वा येऽस्मिन् साधयन्तीन्द्रियार्थान्
स्वप्नाभां स्ते किं प्रमाणं ह्यसन्तः ॥ १८५ ॥

यज्ञं दानञ्च तपोऽनशनं यद् वेद-संविहितम्।
तद्द्यमनियमावपि वर्त्म साधारणं मुमुक्षूणाम् ॥१८६॥
न द्रव्ययज्ञयमिनां प्रशस्तो द्रव्यादि-सम्पत्ति-बलं यदि स्यात्।
यजेद् विशुद्धै विधिवद् विशुद्धैर्हिंस्रो न च स्यात्पशुवत्पशूनाम्॥१८७॥
पात्राय सर्व्वस्व मपि प्रदद्याद्दद्यादपात्राय कपर्द्दिकां न।
पात्रे नदत्वाऽन्यतरे च दत्वा कृच्छ्रीभवेत् दुःकर एष धर्मः॥१८८॥
पात्रं दरिद्रोऽथ कुटुम्बशाली विद्वान् सुवृत्तोऽपतितश्च रुद्रयी।
दद्यादमुष्मै विधिवद्दयाभिर्दीनाय दैन्योद्धरणार्थमेव ॥ १८९॥

दत्तं यत्र परेभ्यस्तत्तु परेभ्यः प्रदत्तमेव जानीहि।
भुक्तं यन्न स सद्भिर्भुक्तं दुःखं तदर्ज्जनैः पूर्वम् ॥ १९० ॥
भुक्तानामर्थानां फलमत्रैव क्षयस्तदुत्थसुखभोगैः।
दत्तानां सत्पात्रे परत्र सुखफलमनन्तगुणलाभैः ॥ १९१ ॥
संगृह्याऽसाधुभ्यः साधुभ्यो यः प्रयच्छतीहार्थम्।
धर्मार्थं कृत्स्नमसौ वेदोक्तैर्वेदसम्मतम् ॥ १९२ ॥
धर्माययाश्चाऽधर्महेतोश्च साधुप्रीत्यप्रीत्योः कीर्त्यकीर्त्योस्तथैव।
अर्थार्थायानर्थहेतोश्च विज्ञैर्देयं देयं देयमेवाभवाय ॥१९३॥
स्वर्ग्यं विधिवद्दत्तं धर्म्यं। धर्माद्विभागतो दत्तम्।
अर्थाय तदर्थफलं शुल्कं धर्म्यं दयामात्रात् ॥ १९४ ॥
धनत्यजाथाऽधनसत्सुखाय प्राणानपि स्वान् त्यज सत्सुखाय।
सर्वेन्द्रियैरेव सहेन्द्रियार्थैरज्ञानमेकं त्यज सत्सुखाय ॥१९५॥
हितम्मितं पूततमं समश्नन्ननाशकः स्यान्म्रियते ह्यनश्नन् ॥१९६॥
स्याद्ब्रह्मचारी ललनाविवर्ज्जनात्सर्वात्मनार्त्तौ तु गृही स्त्रियं स्वाम्।
गच्छन्नदुष्टेष्वृदिलुप्तकामोऽगच्छंश्च दुष्टेदिति सं स्मरन्ति ॥१९७॥
द्वेषादभीष्टप्रमदाभिलाषात् पर्वप्रवासव्रतरोगहीनः।
प्रतीक्ष्य बन्ध्यार्त्तववञ्चनेन कृच्छ्राङ्कितः शुद्ध्यति कृच्छ्रकारी ॥१९८॥
कायेन वाचा मनसा धिया स्त्रियां हित्वा रतिं ब्रह्मगतिं प्रयाति।
दैवीं गतिं याति मतिच्युतश्चेद्द्विजन्मजन्मागारमुपस्थनिग्रहात् ।१९९
सत्यं वदेत्साधु परीक्ष्य दृष्टश्रुतानुमानादिभिरेव तज्ज्ञः।
मिथ्यां वदेत् क्वापि सतां हिताय सतां हितं तथ्यमिति स्मरन्ति॥२००
प्राणत्राणे यस्य वाचा परेषामेवं सर्वत्रापवयापात्।
स्त्रीमन्त्रश्चेन्नर्मयोगे विवाहे मिथ्यापि स्यात्सत्यमित्युक्तमस्ति॥२०१
स्तेयं न कुर्य्यात् किमपीह तद्वत् प्रतिग्रहीस्यान्न धनस्य लोभात्।

गुरोः कृते प्राणपरोक्षये वा तावत् प्रमत्ताज्ञ न दुष्यतस्तौ ॥२०२॥
हिंसां जह्याद्धिंसको हिंसितः स्यात्तुष्टिं दद्यात्तुष्टिदस्तुष्टिमेति।
सन्तुष्टः स्यादात्मनैवात्मतश्चा तुष्टेरन्यं न परं साध्यमस्ति ॥२०३॥
शौचं कुर्य्याद्वाह्य मन्तः सदैव वाह्यादन्तर्जायते भावशुद्धिः।
शुद्धं भावं भावशुद्ध्यैव पश्येत् शुद्धादर्शे वक्त्रवच्छुद्धदृष्टिः ॥२०४॥
शुद्धा सिद्धेर्वासनैका दृढ़ा चेत् कामक्रोधक्षोभमालिन्यपुञ्जात्।
निष्कामस्यात्मत्यतोषक्षमाद्यैः सैका बुद्धिः शुद्धिमेवातनोति॥२०५॥
हन्ता शुद्धः कृच्छ्चान्द्रायणादीन् प्राणायामानाचरेद्वा तपस्वी।
चित्तैकाग्र्यं योगिनां स्यात्तपोग्र्यं तच्चाभ्यग्रेणाचरेन्मानसेन ॥१०६॥
यदात्मसम्बोधकृते क्षमं स्याद्यदीश्वराराधनकृच्च नित्यम्।
तदभ्यसेदध्ययनन्ननीतिकुतर्कशृङ्गारविहारचित्तम्॥ २०७॥
यमनियमेष्वपि योगी त्रितयं वश्यं प्रयत्नतः कुर्य्यात्।
स्त्रीपरिहरणमहिंसनमीशे सर्वार्पणं भक्त्या॥ २०८॥
न स्त्रीकटाक्षविक्षेपाद्विक्षेपोऽन्यो यतेर्यतः।
तस्मात् सर्वात्मना दूरे निक्षिपेद्वामवीक्षणाम्॥ २०९॥
दुःखदो दुःखमाप्नोति दुःखाद्विक्षेप एव हि।
तस्मात् सर्वात्मना दुःखं न दद्यात् कस्यचित् क्वचित्॥ २१०॥
योगे वृद्धिं साधनसमृद्धिमन्तर्विशुद्धिञ्च।
विघ्नविनाशं स्वात्मप्रकाशमेका ददाति शिवभक्तिः॥ २११॥
तस्मादीशप्रधानञ्च कुर्य्यात्तद्विघ्नानां क्षयकृत्सिद्धिदञ्च।
भक्त्या तत्राखिलकर्म्मार्पणेन सिद्धेर्दन्यैर्नियमैः किं यमैर्वा ॥२१२॥

कुमारावूचतुः।

ज्ञानं योगो भक्तिस्तेषामालम्बनं फलञ्च नो ब्रूहि।
इति भूपतिपुत्राभ्यां मुक्तस्ताबूचतुः स मुनिः॥ २१३॥

ज्ञानं विवेकलभ्यं तत्त्वेभ्यः पञ्चविंशस्य।
षड्विंशकेन चैक्यज्ञानं ज्ञानं भवेत्तस्य॥ २१४॥
योगश्च चित्तरोधात्कालेनाभ्यासविरतिभ्याम्।
तस्मिन् योगो योगो योगाचार्य्यैः प्रदर्शितः पूर्वैः॥ २१५॥
द्रष्टुः साक्षात्कारो दृश्याद्भवतीह पञ्चविंशस्य।
षड्विंशस्य तु साक्षात्कारो द्रष्टुः स्वरूपस्य॥ २१६॥
श्रुतिसम्पादितविद्वत्समनुभवोऽयं स्वयं स एवेति।
तद्वैतदिति तत्पश्यन् यथा विमर्शो हि वामदेवस्य॥ २१७॥
अपरोक्षमिदमितोऽन्यद्ब्रह्मास्तीत्येव निश्चयज्ञानम्।
ज्ञातुश्चित्तनिरोधो भवति हि विज्ञाननिश्चयाभ्यासात्॥ २१८॥
प्राणस्पन्दनिरोधाद्रोधोऽसौ हठयोगिनां भवति।
भगवत्प्रेमावेशाद्धि निरोधः सुखेन भक्तानाम्॥ २१९॥
एवं चित्तनिरोधादेषां योगत्वमुच्यते सद्भिः।
जात्याश्रमादिविहितं स्वभावजं भागवतं कर्म॥ २२०॥
अर्पणयोगात् क्रमतः प्रददाति ज्ञानयोगञ्च।
भक्तिर्भगवति भावः सर्वोत्कर्षात्तदाश्रयस्त्रिविधः॥ २२१॥
शुद्धो मायी मायाविरचितदेहः पुमान् स एवैकः।
मायामग्नो मायिकतनुमैशमाश्रितस्तरति॥ २२२॥
पतितो जले जलं पुनरालम्ब्य नाम सन्तरति।
जगतां व्यतिरिक्तन्तं जगतां प्रविलापनात्प्राप्तम्॥ २२३॥
जगतामपवादादपि शुद्धं सेवेत शुद्धधीर्भक्तः।
स च नेति नेति वाक्याद्दृश्याद्व्यतिरिच्यते दृगात्मासौ॥ २२४॥
कार्य्यस्य कारणात्मनि विलापनाद्भाति स क्रमतः।
कारणकार्य्याभेदान्मायीवैतच्चराचरं सर्वम्॥ २२५॥

माया माय्येव परः सोऽस्ति विभातीति धीः परमा ।
माया शक्तिविशिष्टः सर्वज्ञः सर्वशक्तीशः ॥ २२६ ॥
स्रष्टा समस्तजगतां पाता हर्त्ता तिरस्कर्त्ता ।
एवमनुग्रहकर्त्ता भजतां परमः स एवात्मा ॥ २२७ ॥
एकोखिलात्मशक्तेः प्रेरयितृत्वात् प्रभुश्च साक्षी च ।
सेोपादानतयैतज्जगदपि जगतां समाश्रयेोऽधीशः ॥ २२८ ॥
तस्मादहन्तदात्मा तदधीनस्तदाश्रयस्तज्जः ।
दासोऽह मिति च भावप्रकर्षतः प्रेमवानपरः ॥ २२९ ॥
देवविशेषः सदयो मत्क्रियया जातसन्तोषः ।
दास्यति फलमिति यस्तं देहिन मेवा भजेत् स खल्वपरः ॥२३०॥
कामार्थं त्राणार्थं ज्ञानार्थं वा तदाश्रयं कुरुते ।
सोऽपि स्वभावपाकात् क्रमतो मुख्यस्वभाव मायाति ॥ २३१ ॥

कुमारावूचतुः ।

अशरीरेन्द्रियचित्ते मनसो वचसः किलाविषये ।
केनापि नोपलभ्ये विशेषशून्ये निरालम्बे ॥ २३२ ॥
अग्राह्ये चाद्वितीये ब्रह्मणि भावज्ञता कथं भक्तिः ? ।

तावुवाच मुनिः ।

अशरीरेन्द्रियचित्ते यदि न हि सर्व्वज्ञता न सामर्थ्यम् ।
जीव इव केवलासो कथं पुरेतत्समीक्षको भवति ।
कथ मीशते स शक्तेः प्रवर्त्तनाद्वा महत्सृष्टौ ॥ २३३ ॥
भक्त्यां लम्बनयोग्यः कथमपि चेत्तदपि ते वच्मि ।
स खलु यथा श्रुत्युक्तो जयति तया लम्बनीयश्च ॥२३४ ॥
स तु वागविषयोऽपि वाग्विषयीक्रियते ।
स तु वागविषय इति श्रूयते कीर्त्त्यते च ॥ २३५ ॥

चेतोऽविषयोऽपि चेतो विषय इति चिन्त्यते।
नीरूपोऽपि निरूप्यते नीरूप इति ॥ २३६ ॥
अविशेषणोऽपि विशिष्यते स्व-शक्ति-विशेषणेन।
निरालम्बोऽपि समालम्ब्यते जगदालम्ब इति ॥ २३७ ॥
सर्वेन्द्रिय-मनसाद्यनुपलभ्योऽप्युलभ्यते ऽन्तरात्मेति।
अग्राह्योऽपि गृह्यतेऽभ्यासवैराग्याभ्याम् ॥ २३८ ॥
सदैकाग्रचेतसा श्रद्धाभक्तिज्ञानयोगेन।
अत्र श्रुतिश्च श्रद्धाभक्तिज्ञानयोगादवैहीति ॥ २३९ ॥
तस्मादशरीरेन्द्रियचित्ते भक्तिर्भावज्ञता भवत्यस्मिन्।
मायैव तच्छरीरं चित्तं सर्व्वं ज्ञतादि-शक्तिश्च ॥ २४० ॥
स च खल्वपाणिपादश्चेत्यादि श्रुतिगणः स्पष्टः।
अयमर्थस्त्ववधार्य्यो मनसि न कार्य्योऽत्र सन्देहः ॥ २४१ ॥
स शिवः सदैकरूपो न परिणतिं विकार माभजते।
मायास्य विविधभावैर्नृत्यति तन्मात्र-जीवने च नटी ॥ २४२ ॥
जीवेश्वर-जगदाद्यै र्भेदैर्विविधैर्विभात्यभिन्नापि।
इत्यद्भूता माया भागवतीतरव भावना भक्तिः ॥ २४३ ॥
ज्ञानमिदं प्रेमपरं क्रियापर मानसी सैषा।
अन्यक्रियैतदर्थं जयति तदन्या क्रियात्मबन्धाय ॥ २४४ ॥
मन्त्रे गुरौ च देवे स्वात्मनि तस्मिन्नभेदभावना यस्य।
मन्त्री स गुरुर्देवः सखिलात्मै वेश्वरः साक्षात् ॥ २४५ ॥
कास्मा देव मलभ्यः स परः स्वात्मेति पूर्णभावेन।
ननु भावादपि लब्धः शिशुपालाद्यै र्विरुद्धरुद्धापि ॥ २४६ ॥
रुष्यति नचैष हृष्यति पूर्णात्मा पूर्णकामोऽसौ।
भावस्वभाव एष स्वभावकं चानु गृह्णाति ॥ २४७ ॥

एवं योऽन्तर्वृणुते स्वभावतस्तं वृणोति देवोऽसौ।
तस्माद्भावुकहेतुर्भागवतो भावनैवैका॥ २४८॥
सृजति च पाति च हरति च सकलस्त्वकलस्तिरस्कुरुते।
अनुगृह्णाति च गृह्णन् स्वशक्तिभावान् स्वभावभावनेन॥ २४९॥
निरुपाधिः सपरात्मामूर्त्तः शक्त्याश्रयः सूक्ष्मः।
स्थूलः स विश्वमूर्त्तिः सुरनरलीला शरीरी च॥ २५०॥
सङ्कुचिताङ्गः कूर्म्मः प्रसारिताङ्गः प्रसार्य्यमाणाङ्गः।
कूर्म्मान्तरो न तद्वत्परसूक्ष्मस्थूलभावस्थः॥ २५१॥
हरिरिति गिरिरिति गुरुरिति सुहृदिति मातेति तात ईश इति।
फलमिति फलदातेति स्वयमिति तस्मिन् समाचरेत्प्रेम॥२५२॥
शब्दमयीं वा मूर्त्तिं मनोमयीं धीमयीं वापि।
प्राणमयीं वा दैवतदेहमयीं वा समालम्ब्य॥ २५३॥
नाममनोधीप्रभृते रानन्त्यचिन्तनात् क्रमशः।
सम्पाद्य सर्व्वभावं भूमनि भूमान माश्रये देकम्॥ २५४॥
आत्मत्वेन ज्ञातः स चिदात्मा सेव्यते पूर्णः।
श्रवणादिभक्तिभक्त्यास्थूलः सूक्ष्माङ्गवानपि च॥ २५५॥
श्रवणाद्युपजातमहत्प्रेमार्द्राशाद्दशोक्ततो भक्तः।
गायति नृत्यति रोदिति निपतति रोमाञ्चकञ्चुको हसति॥२५६॥
श्रवणात्तदस्य तावत् स्वरूपगुणरूपनामकीर्त्तिनाम्।
कीर्त्तनमेवं स्मरणं वन्दन मुद्देशतोऽपि सम्भवति॥ २५७॥
मनसाङ्गेन च वाचा वाचकवत्तद्यदादिशब्दैर्वा।
वन्दन मथ पदसेवा गुर्व्वादौ स्यात् तदैक्यशासना दत्र॥२५८॥
अर्च्चार्च्चादिषु हृदये सर्व्वात्मनि वा परे परागदृष्ट्या।
तत्तद्व्यत्यागो विषयत्यागोऽथवा तदुद्देशात्॥ २५९॥

स्वात्मनि जगदात्मानं तदर्थशब्देषु तमेव परमार्थम्।
ध्यायेत् कारणकार्य्यप्रविष्टमूर्त्तावकारणममूर्त्तम् ॥२६०॥
निजनिजविहितैः कर्म्मैः समर्पितैः पूज्यते ह्येषः।
प्रायश्चित्तैः प्रायश्चित्तकृतैः पापिभिश्च तथा ॥ २६१ ॥
सख्यं प्रिय इति भावः स च सुदृढं समानशीलयोर्भवति।
न ह्यात्मनः प्रियोऽन्यत्तदात्मभावाच्छिवः सखा भवति ॥२६२॥
भक्तात् प्रियो न शम्भोर्न च तस्मात् प्रियोऽस्ति भक्तस्य।
एतौ ततः सखायौ विशुद्धसत्वात्समानशीलौ च ॥ २६३ ॥
प्रेर्य्य प्रेरकभावाद्दास्यं जीवेशयोः सतताम्।
भजताञ्च मूर्त्तिभेदाद्देवालयमार्ज्जनाद्यैस्तत् ॥ २६४ ॥
जीवात्मा परमात्मनि शक्ता वेतस्य शक्तिकृत्यानि।
कर्त्तृत्वादीन्युच्चैः समर्प्य मुच्येत कर्म्मपाशेभ्यः ॥ २६५ ॥
यद्यत् कृतं शुभाशुभकर्म्मार्पण माचरेच्चतुर्द्धैव।
कर्म्मस्वातन्त्र्यस्वाज्ञानद्वैतार्पणादिभेदेन ॥ २६६ ॥
तन्मयधीस्तद्वश्यस्तदर्थमेवाचरेत् स्वकर्म्माणि।
एवन्विधैव भक्ता भक्त्या मं स्वीय मर्पयेत्सुमतिः ॥ २६७ ॥
तज्ज्ञत्वादिविवेकैः सर्व्वं मत्वा तदेव वा तूष्णीम्।
तिष्ठन्नात्मनि शुद्धे ब्रह्मार्पण मेति भेदनिर्मुक्तः ॥ २६८॥
अनुकूलस्याचरणात् प्रतिकूलविवर्ज्जनाच्छक्त्या।
रक्षिष्यतीति निश्चलविश्वासाद्गोप्तृतावरणात् ॥ २६९ ॥
कार्पण्यात्मकृपेऽस्मिन्निजनिक्षेपात् समस्तभावेन।
कुर्य्यान्निखिलशरण्ये शरणं संसारतोभीतः ॥ २७० ॥
इत्यममूर्त्ते मूर्त्ते भगवति भक्त्या कृपापूर्त्ते।
कुरु न पत मोहगर्त्ते भेददृशां वाञ्छयावर्त्ते ॥ २७१ ॥

पुनरपि कुमारावूचतुः ।

स्मरणं ह्यनुभूतार्थामोषो न कदापि दृष्टरूपस्य ।
तदनुभवे का वार्त्ताऽमूर्त्तें परमात्मनीश्वरेऽचिन्त्ये ॥ २७२

अवयववतः पुरारे रवयवचिन्ता फलकरी भवति ।
निरवयवे चानंशे कथमपि नैवांशचिन्तापि ॥ २७३

मुनिरुवाच ।

मूर्त्तैं रवयवचिन्ता विष्णादेः फलकरी तदुद्देशात् ।
न हि मर्त्त्यावयवानां चिन्ता कुत्रापि फलकरी भवति
एव ममूर्त्तस्य हरे रुद्देशात् किमपि चिन्तयन् योगी ।
अज्ञो वा स्तब्धो वा निःसन्दिग्धं फलं लभते ॥ २७५

शब्दानुमानतः स्यात् सादृश्यात् किञ्चिदुपमानात् ।
ज्ञानं सूक्ष्मधियां परमनुभूतिः स्यात् तदभ्यासात् ॥ २७६

किञ्चिज्ज्ञ मल्पशक्तिं दृष्ट्वा सर्व्वज्ञं सर्व्वशक्तीशम् ।
काष्ठाप्तं ह्यनुमीयाच्चिचाद्यालोकनाद्यथारूपम् ॥ २७७

श्रुतितः स्मृतितो यच्छ्रुतमर्थं सं स्मरन्ति तत् स्मरणम् ।
तस्माच्छृणोति स यथा तथैव तं स्मर्त्तुमीशतेऽज्ञोऽपि ॥ २७८

विज्ञातारं के वा ज्ञातुं शक्ता ह्दादयो ज्ञेयाः ।
यन्नेति नेति शिष्टं विज्ञानं तद्धि तज्ज्ञानम् ॥ २७९

भूतात्मा स्यात् कर्त्ता क्षेत्रज्ञः साक्षितां धत्ते ।
स महात्मा भूतपतिः क्षेत्रज्ञोऽसौ समस्तानाम् ॥ २८०

येनारचितं विश्वं स्वमायया येन भाति लय मेति ।
यदृतेऽस्ति नेह किञ्चिद्यस्य न किञ्चित् प्रतीहि तद्ब्रह्म ॥ २८१

जातं जगत् स्वभावात् स्वभावतोन्तर्व्विलीयते सदिव ।
शरणं स्वभावतोऽतः स्वभाव एवात्र मुक्तये शरणम् ॥ २८२

चित्रे पटे यथान्तः स्थीयं रूपं न भाति सूत्रस्य।
गुणरागचित्रदृष्टौ स्वरूपतो दृश्यते नात्मा॥ २८३
शश्वत् प्रयत्नयोगात् स्वविचारत्चारयोगेन।
सम्यक् गुणरागगणेऽपहृते भवति स्वयं व्यक्तः॥ २८४
आत्ममतिरात्मभक्त्यात्मज्ञान्यात्मयाजीति।
श्रवणादेष ज्ञानी भक्तो यज्वा च योगी च॥ २८५
योगी वा खलु भोगी रोगी वा भवतु संस्कृतिवियोगी।
परमेशे दत्तमति र्गतिं प्रयात्येव नास्ति सन्देहः॥ २८६
स्त्रीशूद्रश्वपचादे रप्युपकारप्रदा त्रिधा भक्तिः।
अपि चेत् सुदुराचारो भजते चेत्यादिसम्मती रूढ़ा॥ २८७
वैदिक-योग-सदागम-पशुपतिमत-पाञ्चरात्र-सारतरा।
परमीशे परमात्मनि रतिरेव परा न चापरा सिद्धिः॥ २८८
आरम्भो न हि नश्यति तद्रूपा सा ज्ञानकर्म्मयोगादौ।
क्रमतो गतिलाभावधि तदल्पमपि हन्ति संसृतेर्भीतिम्॥ २८९
सत्वप्रशोधनफलं यदकामकृतं तदर्थं वा।
तस्य न लोको जन्यो योऽन्तो भविता च निश्चलो लोकः॥ २९०
नेहाभिक्रमनाशोऽस्तीत्याद्युक्तिर्हरेः श्रुतश्चात्र।
न हि तत्क्रियया जातः प्रभोः प्रसादो वृथा भवति॥ २९१
स्वर्गं न चापवर्गं कुतस्त्रिवर्गं समर्थयेऽर्थये यत्नात्।
एका मनन्यभावां भगवति भूतेश्वरे भक्तिम्॥ २९२
परमात्मज्ञानभक्तिश्रवणकृतार्थान्तरौ कुमारौ तौ।
पप्रच्छतु रथ शक्तेर्दैवान्तरशङ्कया भूयः—॥ २९३

शक्ते रन्याश्रयत्वा दपृथग्भावाच्च
शिवशक्तिभेदाद्देवतान्तरकल्पना कथम्।

शरीरग्रहणेऽपि उभयोर्मायिककाय-
श्चिदेकरूपः स्वरूपमुभयोश्च ॥ २९४
शिव इति शक्तिरिति स्फुटमनयोर्भेदः कथं शिवयोः ? ॥ २९५

मुनिरुवाच।

बलिनि गुणिनि बलगुणवत्तद्वति शक्तिस्तदात्मिका न पृथक्।
स्फुरति हि तदियं शक्तिश्चेतना नान्यदेवता भवति ॥ २९६
तद्वज्जचेतनेयं फलदातृत्वाच्च देवता भवति।
शस्त्रादीना मपि यत्समुपाशा दैवतत्वेन ॥ २९७
श्रूयत इह तद्वदिय मचेतना देवता भवतु।
तेषाञ्चिदंशयोगाज्जीवस्यैवास्ति चेतनत्वञ्चेत् ॥ २९८
पूर्णचिदश्चिच्छक्तेः परिणामोऽथ संक्रमो बन्धः।
भवत्युपाधिदोषाद्भेदविमोहोऽत्र चेन्नास्ति ॥ २९९
निर्मलसत्त्वोपाधे रीशितु रस्यास्तथेशायाः।
चिच्छबला वा शक्तिश्चैतन्यं वास्तु शक्तितः शबलम् ॥ ३००
एकार्थेऽत्र च न भिदा शिवयोः प्रत्येति हि प्राज्ञः।
भवतु तथापि चैतन्यवच्छुद्धसत्त्वस्य ॥ १

सत्त्वाधिष्ठातृ-चैतन्यस्योदासीनतया साक्षिमात्रतया स्थितस्य साभिमान-निरभिमानतया भेदो भविष्यति। धर्म्मधर्म्मि-चैतन्ययो रिति चेत्,—नह्यस्या निर्म्मलसत्त्वोपाधे श्चिच्छक्तेः सर्वानुभूति-धर्म्मायाः रजस्तमोभ्या मनावृतत्वाच्छुद्धमात्मानञ्च याथातथ्येनानुभवन्त्यालोकतया स्वमायां मायाकल्पितप्रपञ्चमपि याथातथ्येनानुभवन्त्यानात्माभमूलोऽभिमान-गन्धं कल्पयितुं शक्य स्त्रिकाल-बन्धन-शून्यस्येश्वरोपाधे र्यथा जीवस्याविद्योपाधे स्तत्त्वज्ञानात् पूर्वं बन्ध-भागिनस्तस्माद्विशुद्ध-सत्त्वोपाधि-भूतायाश्चि-

च्छवलाया विशुद्ध-सत्वोपाधे श्चैतन्यस्य तयोः शिवशक्तिनाम्ना गदितयोः सदामुक्तयोः सदासर्व्वज्ञयोः सदेश्वरयोरिति न भेद-कल्पना इयमात्मशक्तिरर्च्चिकेति॥

इय मात्मशक्ति रमला परमात्मैवापरा नैषा।
अस्याः शक्तिविधानं स्वरूपतो नैव सम्बधात्॥ २
जगतां योनिः प्रकृतिः कारणमिति पठ्यते सैवा।
ब्रह्मण्यपि ते शब्दाः श्रूयन्ते ब्रह्मसूत्रेभ्यः॥ ३
देवात्मशक्तिरिति खलु मन्त्रात् तथात्मशब्देन।
कूर्म्मपुराणस्मरणादात्माहमिति देव्युक्तेः॥ ४
मायातीता त्रिगुणातीता शान्तेत्यनन्तेति।
श्रवणादस्याः परमब्रह्मत्वं सिध्यते देव्याः॥ ५
यातीतगोचरतरा वचसो मनसो विशेषणेत्यादि।
विष्णुपुराणश्रवणात्परमाशक्तेरभेदता जयति॥ ६
परमात्मन एकस्य त्रिमूर्त्तयो ब्रह्मविष्णुशिवाः।
हरिवंशे स्मृतमेतत्ते सर्व्वेऽप्यर्द्धनारीशाः॥ ७
शक्तेः शक्तिमतश्चाभेदोऽत्र श्रूयते बहुशः।
तस्माच्छक्तिरुभिन्ना शक्तिरिति देवता न भवति॥ ८
भूमेर्यथा जड़ायाः सचेतना देवतापि भूमिरिति।
एवं समस्तशक्तेरधिदेवी जयति चिच्छक्तिः॥ ९
तस्मान्मायाशबलं ब्रह्मैषा स्त्री गिरा पूज्या।
नेयं योषिन्न पुमान्न षण्ड इति च श्रुतेः सिद्धा॥ १०
स्त्रीमूर्त्तयोऽम्बिकैका तथैव पुंमूर्त्तयः शिवश्चैकः।
तदुभयमूर्त्तिरमूर्त्तस्यात्मन इह विद्धि परमस्य॥ ११
वाणी चेति भवानी शब्दात्मा जयति शङ्करश्चापि।

नीतिर्गौरी शम्भुर्नय इच्छा शैलजा हरः कामः ॥ १२
एवं शिवयोर्भेदाभेदः संपद्यते पुराणादौ ।
एकार्थशब्दवाच्यावेतौ तस्मान्न चानयोर्भेदः ॥ १३
यद्यद्भावं शिव इह धत्ते धत्ते तथैव शिवा ।
एकात्मनोस्तयोः स्त्री-पुंभेदौ लिङ्ग-भेदतो वाच्यौ ॥ १४
न स्त्री पुमान्न षण्डो नात्मायत्नात ! सिद्धोऽस्ति ।
प्रणवस्यार्थविचारे नादान्तवासयो रनयोः ॥ १५
एका वास मुमाया उमापते श्चापि जानीमः ।
शिवशक्त्यात्मक मखिलं सत्यं प्रत्येमि मूर्त्तिमद्भावम् ॥ १६
सूक्ष्मस्थूलसुरासुरनरतिर्य्यक्स्थावरं तथा न शिवौ ।
एतौ समस्तजगतां सारौ पूर्णैककारणाकारौ ॥ १७
देवाकारौ जयतः भजदीक्षणभाषणाधारौ ।
द्विविधध्याने साम्यान्नामनि धामन्यपोह साम्याच्च ॥ १८
सर्व्वज्ञतादि शक्ते रति साम्यादीशलिङ्गमुभयोश्च ।
तदधिष्ठानावस्थारूपानुष्ठानतात्मसाम्याच्च ॥ १९
नाम्नोऽपि ज्ञाः षड्विध मनुसन्धानन्तयोर्भजन्त्यन्तः ।
श्रुतिभिः स्मृतिभि स्तन्त्रै रभेद एवोच्यते शिवयोः ॥ २०
स कुमारः स कुमारीत्याद्याभिः श्रुतिभि रीश-याचकाभिश्च ॥ २१
लैङ्गेऽपि स्मृतमित्थं यथा शिवोयं तथैव देवीति ।
योऽसौ विश्वेश्वर इह विश्वं व्याप्यास्ति सेव विश्वेशी ॥ २२
मोक्षाय देहभाजां धत्ते भगवान् चतूरूपम् ।
हर इति हरिरित्यम्बिकयादियदिति शिवागमः स्मरति ॥ २३
अन्यच्च—एकं ब्रह्म सदासीच्छक्त्या स-प्रलः श्रुतः पश्चात् ।
ईक्षणतोऽभूद्बहुधा तत्त्वाकारस्ततोऽभवद्वितनुः ॥ २४

स्त्रीपुम्भेदादुभयोन्यूनाधिक्यं विलोक्यते सत्यम्।
लीलयेश्वरसत्वे पुंस्त्वं वा नैव नारीत्वम्॥ २५
तत्तदुपासनभेदान्मतिभेदादुपासकानाञ्च।
फलभेदोऽभेदफलन्त्वभेदसम्भाविनां सत्यम्॥ २६
चिच्छक्तिराद्या जगतां भवाया भजद्दशां प्रोतिकृते सदैका।
ब्रह्मेशनारायणगौर्गिरीन्द्रसुता पयोराशिसुतेति भाति॥ २७
ब्रह्मविष्णुशिवमुख्यविग्रहं विग्रहं गिरिभुवः श्रियो गिरः।
लीलयाश्रयति सर्व्वशक्तिमानेक एव नटवन्महेश्वरः॥ २८

ब्रह्मेशनारायणकारणं यद्
अव्यक्तमव्याकृतमात्मसत्वम्।
तद्वैष्णवा विष्णुमिति स्मरन्ति
शैवाः शिवं शक्तिमितीह केचित्॥ २९
न स्त्री पुमान्न न नपुम्प्रकृतिस्तदात्मा
एकः स सेव्यत इहान्तरशेषभावैः।
आमित्यमेति शिव इत्यथ वा शिवेति
ब्रह्मेति विष्णुरिति सूर्य्यइतीष्टभेदात्॥ ३०

तमखिलैर्जपयोगतपोध्वरैः स्वकृतभोगसुखैरपि चार्पितैः।
अखिलभावपरं परिभावयन् निखिलभावसमाश्रयमाश्रयेत्॥ ३१
तत्कृतं विहितमल्पमप्यहो! न क्षयं व्रजति मोक्षतः पुरा।
तद्बलादपि विधाय योगिनं योगिनं नयति मोक्षमक्षयम्॥ ३२
यच्छ्रुतिस्तत्प्रतिफलातिदायिनी यन्नतिस्त्रिजगदुन्नतिप्रदा।
कीर्त्तनं निखिलपापकृन्तनं यस्य तं शृणु नमस्व कीर्त्तय॥ ३३
संस्मृतिर्निखिलमोहविस्मृतिं तत्पदं पदनिषेवनं परम्।
पूजनं सकलपूज्यपूज्यतां यस्य यच्छति तमिच्छ सेवितुम॥ ३४

दासता भवभया दासतां यस्य यच्छति विधेरदासताम् ।
चेतसा व्रज तदङ्घ्रिदासतां सङ्गमेन कृपया सदा सताम् ॥ ३५
सख्य मस्य खलु सर्व्वभोगतः सख्यमाहरति लोकदुस्त्यजम् ।
स्वं निवेदयति योऽस्य सोऽपि तं स्वं प्रवेदयति नित्यनिर्भयम्॥३६
यत्र च क्षणतया क्षणं कृता प्रीतिरेव परिपूर्णलक्षणम् ।
स्वं प्रयच्छति जगद्विलक्षणं तं क्षणं न हि विहातु मर्हसि ॥ ३७
वेदनं हरति यस्य तत्त्वतो वेत्तृवेद्यकृतवन्धवेदनाम् ।
वेदनायकवरस्य तस्य किं वेदनेऽपि मनसास्ति वेदना ॥ ३८
यस्य जापकवरस्य विच्युते देवतादिगतिरेव दुर्गतिः ।
भावतो भवति भावशुद्धितस्तं जपाक्षरमुमापतिं शिवम् ॥ ३९

निःशेषयत्यघगणं विपदो विहन्ति
सर्व्वाः प्रपूरयति सर्व्वमनोरथांश्च ।
बन्धाद्विमोचयति सर्व्वत एव यस्य
नामापि संस्मृतमतः स्मरतामभिस्तम् ॥ ४०

आत्मेति वा निश्चिन्ततं स्वनिश्चयैः सदैकरूपैकरसं विशुद्धम् ।
भजस्व वांशांशिकभेदभावैर्भक्तैकया भक्तकृपात्तचित्तम् ॥ ४१
भजस्व वा तं बहुमन्त्रभेदै र्बहुप्रकारै र्बहुरूपमेकम् ।
एको द्विधा स त्रिविधश्चतुर्द्धा स पञ्चधा सप्तविधोऽर्कसंस्थः ॥४२
भोगिभोगशयनं हरिं तथा भोगिभोगचयभूषणं हरम् ।
भोग्यभोगितरभावतः स्थितं भोगमोक्षफलदं समाश्रय ॥ ४३
सत्वमेक ममलं सनातनं शैववैष्णवविभेदतः स्तुतम् ।
मोहयेद्धि गुणभेददर्शनान्नात्मदर्शिनमपास्तकल्मषम् ॥ ४४
ब्रह्मविष्णुगिरिशाम्बिकात्मनां नामरूपगुणकीर्त्तिभिः शिवः ।
एक एव भगवान् विभाव्यते पुम्स्त्रियातनुरनन्तशक्तिमान् ॥ ४५

नामरूपगुणकीर्त्तिभिर्भिदामेषु भावयति यो मतिच्युतः।
स च्युतो भवति भावना वा चेतसाथ वचसेक्षणादिभिः।
तत्समर्पय जगत्कृतीश्वरे सर्व्वकर्म्मनिगलैर्विमोक्ष्यसे॥ ४६
कर्म्मसूत्रवशतः स हन्तो यद्यदादिशति तत् प्रवर्त्तते।
दारुयोषिदिव यन्त्रचेष्टया चेष्टसे न खलु तेऽस्ति कर्तृता॥ ४७
कर्म्मणा स खलु कर्म्म कारयेत् कर्म्मणा स फलदोऽपि कर्म्मणाम्।
कर्म्मसूत्रमिदमीदृशं प्रभो! कर्म्मणा भ्रमति कर्म्मपूरुषः॥ ४८
जन्ममृत्युविपदादिनेच्छया जायते तव तदिच्छयैव चेत्।
तत्कृतौ तव कथं स्वतन्त्रता कर्तृताम्त्यज विमोहिनी मतः॥ ४९
सर्व्ववित्सजनकोऽल्पविद्भवानीश्वरः स हि भवानीश्वरः।
मायिकोऽसि स च माय्यनन्तदृक् किं वहस्यहह कर्त्तृमानिताम्॥ ५०
भूजलाद्यनिलखप्रमुख्यया सोऽष्टमूर्त्तिधरयाष्टमूर्त्तिधृक्।
षोडशात्मकविकारयुक्तया तद्धि निर्म्मितविचित्रकार्य्यया॥ ५१
निष्क्रियोऽसि सकलं स्वमायया स्वीकरोति सोऽस्तु ते।
तत्र सर्व्वकृतितान्निवेशयन्मोक्ष्यसे निखिलकर्म्मबन्धनैः॥ ५२
कर्तृकर्म्मकरणानि दैवतश्चेष्टतेऽधिकरणस्य योगतः।
सन्निधानवसतस्तदात्मनः साक्षिवत् स्फुरसि निर्म्मलोऽक्रियः॥ ५३
इन्द्रियाणि खलु चेष्टयन्त्यमुन्देह मिन्द्रियगणान् समीरणाः।
तान् मनस्तदपि धी रहश्च तान् तत्क्रियाफलदशक्तिरैश्वरी॥ ५४
कृत्यमत्र भवतो न विद्यते पूर्णचिद्गगननिर्म्मलात्मनः।
निश्चलस्य न गतिस्तवागतिर्निर्भ्र-
मोऽसि भवतातिनिर्भ्रमः॥ ५५
अथवा। दुःखानि शोधनकृतेऽखिलदुष्कृतानां
सौख्यानि मोचनकृते किल सत्कृतानाम्।

आदेशपालनकृतेऽखिलकर्म्मशम्भोः
सन्धारयतो न खलु कर्म्मफलोपभोगः ॥ ५६
यत् त्यक्तं प्रथमैः पुराथ पुरतो यत् त्यज्यते तत् त्यज
त्यक्तुं शक्यत एव यत् न मननात् स्वप्नेऽपि मा तत् त्यज।
धर्म्मं संश्रयतत्परं परिहरन् धर्म्मं पुरस्तत्परं
प्रत्यक्षं प्रविहाय सानुभवतः प्रत्यक्षतः स्थीयताम् ॥ ५७

धिक्कृत्य संसारवदृष्टसिद्धीः स्वीकृत्य संसारवदृष्टसिद्धीः।
विधाय तुष्टिं नच चन्द्रमौलिजां विधाय तुष्टिं नवचन्द्रमौलिजां॥५८
बधेन मुक्तः स्फुरदिन्द्रियाणां बधेन युक्तः स्फुरदिन्द्रियाणाम्।
तत्प्राप्तये ज्ञानमुरीकुरुष्व तत्प्राप्तये ज्ञानमपाकुरुष्व ॥ ५९
विक्षेपयोर्निं सकलां विहाय विहाय चिन्तामपि भोगजाले।
अहम्मयं मोहमलं विहाय विहाय सेह व्रज साम्य मन्तः ॥ ६०

निष्कामं कुरु कर्म्म धिक् कुरु भवं मोक्षाय बुद्धिं कुरु
श्रेयोर्थी शिवदं नमस्कुरु गुरुं स्वं योगतः संस्कुरु।
मा शक्तिं कुरु कुत्र चाद्वयमतः स्वात्मानमङ्गीकुरु
प्रेम्णान्तः कुरुसर्व्वदेव शरणं सर्व्वात्मना शङ्करम् ॥ ६१
बन्धून् सं त्यज सं त्यजालयरुचिं स्वर्गस्पृहां सं त्यज
स्नेहं सं त्यज सर्व्वथेन्द्रियगणैर्देहाभिमानं त्यज।
सत्वं सं भज सत्वतोऽपि पुरुषं सूक्ष्मं स्वरूपं भज
भक्त्यान्तर्भज सर्व्वभावशरणं सर्व्वात्मना शङ्करम् ॥ ६२

गुरुं प्रियं निज पितरावधीश्वरं स्वभीष्टदं शरणदमिष्टदैवतम्।
कृपायनं सकलसमर्पणस्थलं सदाशिवं शरणमुपैहि शङ्करम्॥६३
जगत्करं प्रलयङ्करं कृपाकरं तिरस्करं त्रिविधं स्ततेगुर्णाकरम्।
अनुग्रहङ्करमखिलस्य भास्करं विमोहजे तमसि भजस्व शङ्करम्॥६४

